इममादित्या वसुना समुक्षतेममग्ने वर्धय वावृधानः ।
इममिन्द्र सं सृज वीर्येणास्मिन् त्रिवृच्छ्रयतां पोषयिष्णु ४
भूमिष्ट्वा पातु हरितेन विश्वभृदग्निः पिपर्त्वयसा सजोषाः ।
वीरुद्भिष्टे अर्जुनं संविदानं दक्षं दधातु सुमनस्यमानम् ५
त्रेधा जातं जन्मनेदं हिरण्यमग्नेरेकं प्रियतमं बभूव
सोमस्यैकं हिंसितस्य परापतत् ।
अपामेकं वेधसां रेत आहुस्तत् ते हिरण्यं त्रिवृदस्त्वायुषे ६
त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् ।
त्रेधामृतस्य चक्षणं त्रीण्यायूंषि तेऽकरम् ७
त्रयः सुपर्णास्त्रिवृता यदायन्नेकाक्षरमभिसंभूय शक्राः ।
प्रत्यौहन् मृत्युममृतेन साकमन्तर्दधाना दुरितानि विश्वा ८
दिवस्त्वा पातु हरितं मध्यात् त्वा पात्वर्जुनम् ।
भूम्या अयस्मयं पातु प्रागाद् देवपुरा अयम् ९
इमास्तिस्रो देवपुरास्तास्त्वा रक्षन्तु सर्वतः ।
तास्त्वं बिभ्रद् वर्चस्व्युत्तरो द्विषतां भव १०
पुरं देवानाममृतं हिरण्यं य आबेधे प्रथमो देवो अग्रे ।
तस्मै नमो दश प्राचीः कृणोम्यनु मन्यतां त्रिवृदाबधे मे ११
आ त्वा चृतत्वर्यमा पूषा बृहस्पतिः ।
अहर्जातस्य यन्नाम तेन त्वाति चृतामसि १२
ऋतुभिष्ट्वार्तवैरायुषे वर्चसे त्वा ।
संवत्सरस्य तेजसा तेन संहनु कृण्मसि १३
घृतादुल्लुप्तं मधुना समक्तं भूमिदृंहमच्युतं पारयिष्णु ।
भिन्दत् सपत्नानधरांश्च कृण्वदा मा रोह महते सौभगाय १४ (३३२)

## (२९) रक्षोघ्नम् ।

१-१५ चातनः । जातवेदाः, मन्त्रोक्ताः । त्रिष्टुप्, ३ त्रिपदा विराण्नाम गायत्री, ५ पुरोऽतिजगती विराड्जगती, १२-१५ अनुष्टुप् ( १२ भुरिक्, १४ चतुष्पदा पराबृहती ककुम्मती । )

पुरस्ताद् युक्तो वह जातवेदोऽग्ने विद्धि क्रियमाणं यथेदम् ।
त्वं भिषग् भेषजस्यासि कर्ता त्वया गामश्वं पुरुषं सनेम १ (३३३)

तथा तदग्ने कृणु जातवेदो विश्वेभिर्देवैः सह संविदानः ।
यो नो दिदेव यतमो जघास यथा सो अस्य परिधिष्पताति २
यथा सो अस्य परिधिष्पताति तथा तदग्ने कृणु जातवेदः ।
विश्वेभिर्देवैः सह संविदानः ३
अक्ष्यौ३ नि विध्य हृदयं नि विध्य जिह्वां नि तृन्द्धि प्र दतो मृणीहि ।
पिशाचो अस्य यतमो जघासाग्ने यविष्ठ प्रति तं शृणीहि ४
यदस्य हृतं विहृतं यत् पराभृतमात्मनो जग्धं यतमत् पिशाचैः ।
तदग्ने विद्वान् पुनरा भर त्वं शरीरे मांसमसुमेरयामः ५
आमे सुपक्के शबले विपक्वे यो मा पिशाचो अशने ददम्भ ।
तदात्मना प्रजया पिशाचा वि यातयन्तामगदो३यमस्तु ६
क्षीरे मा मन्थे यतमो ददम्भाकृष्टपच्ये अशने धान्ये३ यः ।
तदात्मना प्रजया पिशाचा वि यातयन्तामगदो३यमस्तु ७
अपां मा पाने यतमो ददम्भ क्रव्याद् यातूनां शयने शयानम् ।
तदात्मना प्रजया पिशाचा वि यातयन्तामगदो३यमस्तु ८
दिवा मा नक्तं यतमो ददम्भ क्रव्याद् यातूनां शयने शयानम् ।
तदात्मना प्रजया पिशाचा वि यातयन्तामगदो३यमस्तु ९
क्रव्यादमग्ने रुधिरं पिशाचं मनोहनं जहि जातवेदः ।
तमिन्द्रो वाजी वज्रेण हन्तु छिनत्तु सोमः शिरो अस्य धृष्णुः १०
सनादग्ने मृणसि यातुधानान् न त्वा रक्षांसि पृतनासु जिग्युः ।
सहमूराननु दह क्रव्यादो मा ते हेत्या मुक्षत दैव्यायाः ११
समाहर जातवेदो यद्धृतं यत् पराभृतम् ।
गात्राण्यस्य वर्धन्तामंशुरिवा प्यायतामयम् १२
सोमस्येव जातवेदो अंशुरा प्यायतामयम् ।
अग्ने विरप्शिनं मेध्यमयक्ष्मं कृणु जीवतु १३
एतास्ते अग्ने समिधः पिशाचजम्भनीः ।
तास्त्वं जुषस्व प्रति चैना गृहाण जातवेदः १४
तार्ष्टाघीरग्ने समिधः प्रति गृह्णाह्यर्चिषा ।
जहातु क्रव्याद् रूपं यो अस्य मांसं जिहीर्षति १५

## ( ३० ) दीर्घायुष्यम्।

१-१७ उन्मोचनः ( आयुष्कामः )। आयुष्यम्। अनुष्टुप्, १ पथ्यापङ्क्तिः, ९ भुरिक्, ११ चतुष्पदा विराड्जगती, १४ विराटप्रस्तारपङ्क्तिः, १७ त्र्यवसाना षट्पदा जगती।

आवर्तस्त आवर्तः परावर्तस्त आवर्तः।
इहैव भव मा नु गा मा पूर्वाननु गाः पितॄनसुं बध्नामि ते दृढम् १
यत् त्वाभिचेरुः पुरुषः स्वो यदरणो जनः। उन्मोचनप्रमोचने उभे वाचा वदामि ते २
यद् दुद्रोहिथ शेपिषे स्त्रियै पुंसे अचित्त्या। उन्मोचनप्रमोचने उभे वाचा वदामि ते ३
यदेनसो मातृकृताच्छेषे पितृकृताच्च यत्। उन्मोचनप्रमोचने उभे वाचा वदामि ते ४
यत् ते माता यत् ते पिता जामिर्भ्राता च सर्जतः। प्रत्यक् सेवस्व भेषजं जरदष्टिं कृणोमि त्वा ५
इहैधि पुरुष सर्वेण मनसा सह। दूतौ यमस्य मानु गा अधि जीवपुरा इहि ६
अनुहूतः पुनरेहि विद्वानुदयनं पथः। आरोहणमाक्रमणं जीवतोजीवतोऽयनम् ७
मा बिभेर्न मरिष्यसि जरदष्टिं कृणोमि त्वा। निरवोचमहं यक्ष्ममङ्गेभ्यो अङ्गज्वरं तव ८
अङ्गभेदो अङ्गज्वरो यश्च ते हृदयामयः। यक्ष्मः श्येन इव प्रापप्तद् वाचा साढः परस्तराम् ९
ऋषी बोधप्रतीबोधावस्वप्नो यश्च जागृविः। तौ ते प्राणस्य गोप्तारौ दिवा नक्तं च जागृताम् १०
अयमग्निरुपसद्य इह सूर्य उदेतु ते। उदेहि मृत्योर्गम्भीरात् कृष्णाच्चित् तमसस्परि ११
नमो यमाय नमो अस्तु मृत्यवे नमः पितृभ्य उत ये नयन्ति।
उत्पारणस्य यो वेद तमग्निं पुरो दधेऽस्मा अरिष्टतातये १२
ऐतु प्राण ऐतु मन ऐतु चक्षुरथो बलम्। शरीरमस्य सं विदां तत् पद्भ्यां प्रति तिष्ठतु १३
प्राणेनाग्ने चक्षुषा सं सृजेमं समीरय तन्वा३ सं बलेन।
वेत्थामृतस्य मा नु गान्मा नु भूमिगृहो भुवत् १४
मा ते प्राण उप दसन्मो अपानोऽपि धायि ते। सूर्यस्त्वाधिपतिर्मृत्योरुदायच्छतु रश्मिभिः १५
इयमन्तर्वदति जिह्वा बद्धा पनिष्पदा। त्वया यक्ष्मं निरवोचं शतं रोपीश्च तक्मनः १६
अयं लोकः प्रियतमो देवानामपराजितः। यस्मै त्वमिह मृत्यवे दिष्टः पुरुष जज्ञिषे।
स च त्वानु ह्वयामसि मा पुरा जरसो मृथाः १७ (३६४)

## ( ३१ ) कृत्यापरिहरणम्।

१-१२ शुक्रः। कृत्यादूषणम्। अनुष्टुप्, ११ बृहतीगर्भा अनुष्टुप्, १२ पथ्याबृहती।

यां ते चक्रुरामे पात्रे यां चक्रुर्मिश्रधान्ये।
आमे मांसे कृत्यां यां चक्रुः पुनः प्रति हरामि ताम् १ (३६५)

यां ते॑ च॒क्रुः कृ॑क॒वाका॑व॒जे वा॒ यां कु॑री॒रिणि॑ ।
अव्यां॑ ते कृ॒त्यां यां च॒क्रुः पुन॒: प्रति॑ हरा॒मि ताम् ॥ २

यां ते॑ च॒क्रुरेक॑शफे पशू॒नामु॑भ॒याद॑ति ।
ग॒र्द॒भे कृ॒त्यां यां च॒क्रुः पुन॒: प्रति॑ हरा॒मि ताम् ॥ ३

यां ते॑ च॒क्रुर॑मू॒लायां॑ वल॒गं वा॑ नरा॒च्याम् ।
क्षेत्रे॑ ते कृ॒त्यां यां च॒क्रुः पुन॒: प्रति॑ हरा॒मि ताम् ॥ ४

यां ते॑ च॒क्रुर्गार्ह॑पत्ये पूर्वा॒ग्नावु॒त दु॒श्चित॑: ।
शाला॑यां कृ॒त्यां यां च॒क्रुः पुन॒: प्रति॑ हरा॒मि ताम् ॥ ५

यां ते॑ च॒क्रुः स॒भायां॒ यां च॒क्रुर॑धि॒देव॑ने ।
अ॒क्षेषु॑ कृ॒त्यां यां च॒क्रुः पुन॒: प्रति॑ हरा॒मि ताम् ॥ ६

यां ते॑ च॒क्रुः सेना॑यां॒ यां च॒क्रुरि॑ष्वायु॒धे ।
दु॒न्दु॒भौ कृ॒त्यां यां च॒क्रुः पुन॒: प्रति॑ हरा॒मि ताम् ॥ ७

यां ते॑ कृ॒त्यां कूपे॑ऽवद॒धुः श्म॑शा॒ने वा॑ नि॒च॒ख्नुः ।
सद्म॑नि कृ॒त्यां यां च॒क्रुः पुन॒: प्रति॑ हरा॒मि ताम् ॥ ८

यां ते॑ च॒क्रुः पु॑रुषा॒स्थे अ॒ग्नौ संक॑सुके च॒ याम् ।
म्रो॒कं नि॑र्दा॒हं क्र॒व्याद॒ं पुन॒: प्रति॑ हरा॒मि ताम् ॥ ९

अप॑थे॒ना ज॑भारै॒णां तां प॒थेत॒: प्र हि॑ण्मसि ।
अधी॑रो म॒र्याधी॑रेभ्य॒: सं ज॑भा॒राचि॑त्त्या ॥ १०

यश्च॒कार॒ न श॒शाक॒ कर्तुं॑ श॒श्रे पाद॑म॒ङ्गुरि॑म् ।
च॒कार॑ भ॒द्रम॒स्मभ्य॑मभ॒गो भग॑वद्भ्यः ॥ ११

कृ॒त्याकृ॑तं वल॒गिनं॑ मू॒लिनं॑ शपथे॒य्य॑म् ।
इन्द्र॒स्तं ह॑न्तु मह॒ता व॒धेना॒ग्निर्वि॑ध्यत्व॒स्तया॑ ॥ १२ (३७६)

॥ इति षष्ठोऽनुवाकः ॥६॥

[ इति द्वादशः प्रपाठकः ॥१२॥ ]

॥ इति पञ्चमं काण्डं समाप्तम् ॥५॥

मन्त्रसंख्या—

चतुर्थकाण्डस्यान्तपर्यन्तं ९१४
पञ्चमकाण्डस्य... ३७६
सर्वयोगः १२९०

# षष्ठं काण्डम् ।

(१) अमृतप्रदाता ।

१-३ अथर्वा । सविता । उष्णिक्, १ त्रिपदा पिपीलिकमध्या साम्नी जगती, २-३ पिपीलिकमध्या पुरउष्णिक् ।

[ अथ त्रयोदशः प्रपाठकः ॥१३॥ ]

[१] दोषो गाय बृहद् गाय द्युमद् धेहि । आथर्वण स्तुहि देवं सवितारम् १
तमु ष्टुहि यो अन्तः सिन्धौ सूनुः। सत्यस्य युवानमद्रोघवाचं सुशेवम् २
स घा नो देवः सविता साविषदमृतानि भूरि । उभे सुष्टुती सुगातवे ३ (१)

(२) जेता इन्द्रः ।

१-३ अथर्वा । सोमः, वनस्पतिः । परोष्णिक् ।

इन्द्राय सोममृत्विजः सुनोता च धावत । स्तोतुर्यो वचः शृणवद्धवं च मे १
आ यं विशन्तीन्दवो वयो न वृक्षमन्धसः । विरप्शिन् वि मृधो जहि रक्षस्विनीः २
सुनोता सोमपाव्ने सोममिन्द्राय वज्रिणे । युवा जेतेशानः स पुरुष्टुतः ३ (२)

(३) आत्मगोपनम् ।

१-३ अथर्वा । १ इन्द्रापूषणौ, अदितिः, मरुतः, अपां नपात्, सिन्धवः, विष्णुः, द्यौः; २ द्यावापृथिवी, ग्रावा, सोमः, सरस्वती, अग्निः; ३ अश्विनौ, उषासानक्ता, अपां नपात्, त्वष्टा । जगती, १ पथ्याबृहती ।

पातं न इन्द्रापूषणादितिः पान्तु मरुतः ।
अपां नपात् सिन्धवः सप्त पातन पातु नो विष्णुरुत द्यौः १
पातां नो द्यावापृथिवी अभिष्टये पातु ग्रावा पातु सोमो नो अंहसः ।
पातु नो देवी सुभगा सरस्वती पात्वग्निः शिवा ये अस्य पायवः २
पातां नो देवाश्विना शुभस्पती उषासानक्तोत न उरुष्यताम् ।
अपां नपादभिह्रुती गयस्य चिद् देव त्वष्टर्वर्धय सर्वतातये ३

(४) आत्मगोपनम्।

१-३ अथर्वा। १ त्वष्टा, पर्जन्यः, ब्रह्मणस्पतिः, अदितिः; २ अंशः, भगः, वरुणः, मित्रः, अर्यमा, अदितिः, मरुतः; ३ अश्विनौ, द्यौष्पिता। पथ्याबृहती, २ संस्तारपङ्क्तिः, ३ त्रिपदा विराड्गायत्री।

त्वष्टा मे दैव्यं वचः पर्जन्यो ब्रह्मणस्पतिः।
पुत्रैर्भ्रातृभिरदितिर्नु पातु नो दुष्टरं त्रायमाणं सहः १
अंशो भगो वरुणो मित्रो अर्यमादितिः पान्तु मरुतः।
अप तस्य द्वेषो गमेदभिह्रुतो यावयच्छत्रुमन्तितम् २
धिये समश्विना प्रावतं न उरुष्या ण उरुज्मन्नप्रयुच्छन्।
द्यौ३ष्पितर्यावय दुच्छुना या ३ (१२)

(५) वर्चःप्राप्तिः।

१-३ अथर्वा। १ अग्निः, २ इन्द्रः, ३ अग्निः, सोमः, ब्रह्मणस्पतिः। अनुष्टुप्, २ भुरिक्।

उदेनमुत्तरं नयाग्ने घृतेनाहुत। समेनं वर्चसा सृज प्रजया च बहुं कृधि १
इन्द्रेमं प्रतरं कृधि सजातानामसद् वशी। रायस्पोषेण सं सृज जीवातवे जरसे नय २
यस्य कृण्मो हविर्गृहे तमग्ने वर्धया त्वम्। तस्मै सोमो अधि ब्रवदयं च ब्रह्मणस्पतिः ३ (१५)

(६) शत्रुनाशनम्।

१-३ अथर्वा। १ ब्रह्मणस्पतिः, २-३ सोमः। अनुष्टुप्।

योऽ३स्मान् ब्रह्मणस्पतेऽदेवो अभिमन्यते। सर्वं तं रन्धयासि मे यजमानाय सुन्वते १
यो नः सोम सुशंसिनो दुःशंस आदिदेशति। वज्रेणास्य मुखे जहि स संपिष्टो अपायति २
यो नः सोमाभिदासति सनाभिर्यश्च निष्ट्यः। अप तस्य बलं तिर महीव द्यौर्वधत्मना ३ (१८)

(७) असुरक्षयणम्।

१-३ अथर्वा। सोमः, अदितिः, ३ देवाः। गायत्री, १ निचृत्।

येन सोमादितिः पथा मित्रा वा यन्त्यद्रुहः। तेना नोऽवसा गहि १
येन सोम साहन्त्यासुरान् रन्धयासि नः। तेना नो अधि वोचत २
येन देवा असुराणामोजांस्यवृणीध्वम्। तेना नः शर्म यच्छत ३ (२१)

(८) कामात्मा।

१-३ जमदग्निः। कामात्मा, २ सुपर्णः, ३ द्यावापृथिवी, सूर्यः। पथ्यापङ्क्तिः।

यथा वृक्षं लिबुजा समन्तं परिषस्वजे।
एवा परि ष्वजस्व मां यथा मां कामिन्यसो यथा मन्नापगा असः १ (२२)

यथा सुपर्णः प्रपतन् पक्षौ निहन्ति भूम्याम्
एवा नि हन्मि ते मनो यथा मां कामिन्यसो यथा मन्नापगा असः २
यथेमे द्यावापृथिवी सद्यः पर्येति सूर्यः ।
एवा पर्येमि ते मनो यथा मां कामिन्यसो यथा मन्नापगा असः ३ (२४)

(९) कामात्मा ।

१-३ जमदग्निः । कामात्मा, ३ गावः । अनुष्टुप् ।

वाञ्छ मे तन्वं१ पादौ वाञ्छाक्ष्यौ३ वाञ्छ सक्थ्यौ ।
अक्ष्यौ वृषण्यन्त्याः केशा मां ते कामेन शुष्यन्तु १
मम त्वा दोषणिश्रिषं कृणोमि हृदयश्रिषम् । यथा मम क्रतावसो मम चित्तमुपायसि २
यासां नाभिरारेहणं हृदि संवननं कृतम् । गावो घृतस्य मातरोऽमूं सं वानयन्तु मे ३ (२७)

(१०) संप्रोक्षणम् ।

१-३ शन्तातिः । १ पृथिवी, श्रोत्रं, वनस्पतिः, अग्निः; २ प्राणः, अन्तरिक्षं, वयः, वायुः; ३ द्यौः, चक्षुः, नक्षत्राणि, सूर्यः । द्वैपदम्, १ साम्नी त्रिष्टुप्, २ प्राजापत्या बृहती, ३ साम्नी बृहती ।

पृथिव्यै श्रोत्राय वनस्पतिभ्योऽग्नयेऽधिपतये स्वाहा १
प्राणायान्तरिक्षाय वयोभ्यो वायवेऽधिपतये स्वाहा २
दिवे चक्षुषे नक्षत्रेभ्यः सूर्यायाधिपतये स्वाहा ३ (३०)

॥ इति प्रथमोऽनुवाकः ॥१॥

(११) पुंसवनम् ।

१-३ प्रजापतिः । रेतः, ३ प्रजापतिः, अनुमतिः, सिनीवाली । अनुष्टुप् ।

[२] शमीमश्वत्थ आरूढस्तत्र पुंसुवनं कृतम् । तद् वै पुत्रस्य वेदनं तत् स्त्रीष्वा भरामसि १
पुंसि वै रेतो भवति तत् स्त्रियामनु षिच्यते । तद् वै पुत्रस्य वेदनं तत् प्रजापतिरब्रवीत् २
प्रजापतिरनुमतिः सिनीवाल्यचीक्लृपत् । स्त्रैषूयमन्यत्र दधत् पुमांसमु दधदिह ३ (३३)

(१२) सर्प-विष-निवारणम् ।

१-३ गरुत्मान् । तक्षकः । अनुष्टुप् ।

परि द्यामिव सूर्योऽहीनां जनिमागमम् । रात्री जगदिवान्यद्धंसात् तेना ते वारये विषम् १
यद् ब्रह्मभिर्यदृषिभिर्यद् देवैर्विदितं पुरा । यद् भूतं भव्यमासन्वत् तेना ते वारये विषम् २
मध्वा पृञ्चे नद्य१ः पर्वता गिरयो मधु । मधु परुष्णी शीपाला शमास्ने अस्तु शं हृदे ३ (३६)

( १३ ) मृत्युजयः ।

१-३ अथर्वा ( स्वस्त्ययनकामः ) । मृत्युः । अनुष्टुप् ।

नमो देववधेभ्यो नमो राजवधेभ्यः । अथो ये विश्यानां वधास्तेभ्यो मृत्यो नमोऽस्तु ते १
नमस्ते अधिवाकाय पराचाकाय ते नमः । सुमत्यै मृत्यो ते नमो दुर्मत्यै त इदं नमः २
नमस्ते यातुधानेभ्यो नमस्ते भेषजेभ्यः । नमस्ते मृत्यो मूलेभ्यो ब्राह्मणेभ्य इदं नमः ३ (३९)

( १४ ) बलासनाशनम् ।

१-३ बभ्रुपिङ्गलः । बलासः । अनुष्टुप् ।

अस्थिस्रंसं परुस्रंसमास्थितं हृदयामयम् । बलासं सर्वं नाशयाङ्गेष्ठा यश्च पर्वसु १
निर्बलासं बलासिनः क्षिणोमि मुष्करं यथा । छिनद्म्यस्य बन्धनं मूलमुर्वार्वा इव २
निर्बलासेतः प्र पताशुंगः शिशुको यथा । अथो इट इव हायनोप द्राह्यवीरहा ३ (४२)

( १५ ) शत्रुनिवारणम् ।

१-३ उद्दालकः । वनस्पतिः । अनुष्टुप् ।

उत्तमो अस्योषधीनां तव वृक्षा उपस्तयः । उपस्तिरस्तु सोऽस्माकं यो अस्माँ अभिदासति १
सबन्धुश्चासबन्धुश्च यो अस्माँ अभिदासति । तेषां सा वृक्षाणामिवाहं भूयासमुत्तमः २
यथा सोम ओषधीनामुत्तमो हविषां कृतः । तलाशा वृक्षाणामिवाहं भूयासमुत्तमः ३ (४५)

( १६ ) अक्षिरोगभैषजम् ।

१-४ शौनकः । चन्द्रमाः, मन्त्रोक्तदेवताः । अनुष्टुप्, १ निचृत्त्रिपदा गायत्री,
३ बृहतीगर्भा ककुम्मत्यनुष्टुप्, ४ त्रिपदा प्रतिष्ठा ।

आबयो अनाबयो रसस्त उग्र आबयो । आ ते करम्भमद्मसि १
विहह्लो नाम ते पिता मदावती नाम ते माता । स हिन त्वमसि यस्त्वमात्मानमावयः २
तौविलिकेऽवेलयावायमैलब ऐलयीत् । बभ्रुश्च बभ्रुकर्णश्चापेहि निराल ३
अलसालासि पूर्वा सिलाञ्जालास्युत्तरा । नीलागलसाला ४ (४९)

( १७ ) गर्भदृंहणम् ।

१-४ अथर्वा । गर्भदृंहणम्, पृथिवी । अनुष्टुप् ।

यथेयं पृथिवी मही भूतानां गर्भमादधे । एवा ते ध्रियतां गर्भो अनु सूतुं सवितवे १
यथेयं पृथिवी मही दाधारेमान् वनस्पतीन् । एवा ते ध्रियतां गर्भो अनु सूतुं सवितवे २
यथेयं पृथिवी मही दाधार पर्वतान् गिरीन् । एवा ते ध्रियतां गर्भो अनु सूतुं सवितवे ३ (५२)

यथेयं पृथिवी मही दाधार विष्ठितं जगत् । एवा ते म्रियतां गर्भो अनु सूतुं सवितवे ४ (५३)

(१८) ईर्ष्याविनाशनम्।

१-३ अथर्वा । ईर्ष्याविनाशनम् । अनुष्टुप् ।

ईर्ष्याया ध्राजिं प्रथमां प्रथमस्या उतापराम् । अग्निं हृदय्यं१ शोकं तं ते निर्वापयामसि १
यथा भूमिर्मृतमना मृतान्मृतमनस्तरा । यथोत मम्रुषो मन एवेर्ष्योर्मृतं मनः २
अदो यत् ते हृदि श्रितं मनस्कं पतयिष्णुकम् । ततस्त ईर्ष्यां मुञ्चामि निरूष्माणं दृतेरिव ३ (५६)

(१९) पावमानम्।

१-३ शन्तातिः । चन्द्रमाः, १ देवजनाः, मनवः, विश्वा भूतानि, पवमानः; २ पवमानः, ३ सविता । गायत्री, १ अनुष्टुप् ।

पुनन्तु मा देवजनाः पुनन्तु मनवो धिया । पुनन्तु विश्वा भूतानि पवमानः पुनातु मा १
पवमानः पुनातु मा क्रत्वे दक्षाय जीवसे । अथो अरिष्टतातये २
उभाभ्यां देव सवितः पवित्रेण सवेन च । अस्मान् पुनीहि चक्षसे ३ (५९)

(२०) यक्ष्मनाशनम्।

१-३ भृग्वङ्गिराः । यक्ष्मनाशनम् । १ अतिजगती, २ ककुम्मतीप्रस्तारपङ्क्तिः, ३ सतः पङ्क्तिः ।

अग्नेरिवास्य दहत एति शुष्मिण उतेव मत्तो विलपन्नपायति ।
अन्यमस्मदिच्छतु कं चिदव्रतस्तपुर्वधाय नमो अस्तु तक्मने १
नमो रुद्राय नमो अस्तु तक्मने नमो राज्ञे वरुणाय त्विषीमते ।
नमो दिवे नमः पृथिव्यै नम ओषधीभ्यः २
अयं यो अभिशोचयिष्णुर्विश्वा रूपाणि हरिता कृणोषि ।
तस्मै तेऽरुणाय बभ्रवे नमः कृणोमि वन्याय तक्मने ३ (६२)

॥ इति द्वितीयोऽनुवाकः ॥२॥

(२१) केशवर्धनी ओषधिः ।

१-३ शन्तातिः । चन्द्रमाः । अनुष्टुप् ।

[३] इमा यास्तिस्रः पृथिवीस्तासां ह भूमिरुत्तमा । तासामधि त्वचो अहं भेषजं समु जग्रभम् १
श्रेष्ठमसि भेषजानां वसिष्ठं वीरुधानाम् । सोमो भग इव यामेषु देवेषु वरुणो यथा २
रेवतीरनाधृषः सिषासवः सिषासथ । उत स्थ केशदृंहणीरथो ह केशवर्धनीः ३ (६५)

( २२ ) भैषज्यम् ।

१-३ शन्तातिः । १ आदित्यरश्मिः, २-३ मरुतः । त्रिष्टुप्, २ चतुष्पदा भुरिग्जगती ।

कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत् पतन्ति ।
त आववृत्रन्त्सदनादृतस्यादिद् घृतेन पृथिवीं व्यूदुः १

पयस्वतीः कृणुथाप ओषधीः शिवा यदेजथा मरुतो रुक्मवक्षसः ।
ऊर्जं च तत्र सुमतिं च पिन्वत यत्रा नरो मरुतः सिञ्चथा मधु २

उदप्रुतो मरुतस्ताँ इयर्त वृष्टिर्या विश्वा निवतस्पृणाति ।
एजाति ग्लहा कन्येव तुन्नैरुं तुन्दाना पत्येव जाया ३ (६८)

( २३ ) अपां भैषज्यम् ।

१-३ शन्तातिः । आपः । १ अनुष्टुप्, २ त्रिपदा गायत्री, ३ परोष्णिक् ।

सस्रुषीस्तदपसो दिवा नक्तं च सस्रुषीः । वरेण्यक्रतुरहमपो देवीरुप ह्वये १
ओता आपः कर्मण्या मुञ्चन्त्वितः प्रणीतये । सद्यः कृण्वन्त्वेतवे २
देवस्य सवितुः सवे कर्म कृण्वन्तु मानुषाः । शं नो भवन्त्वप ओषधीः शिवाः ३ (७१)

( २४ ) अपां भैषज्यम् ।

१-३ शन्तातिः । आपः । अनुष्टुप् ।

हिमवतः प्र स्रवन्ति सिन्धौ समह संगमः ।
आपो ह मह्यं तद् देवीर्ददन् हृद्द्योतभेषजम् १

यन्मे अक्ष्योरादिद्योत पार्ष्ण्योः प्रपदोश्च यत् ।
आपस्तत् सर्वं निष्करन् भिषजां सुभिषक्तमाः २

सिन्धुपत्नीः सिन्धुराज्ञीः सर्वा या नद्यर स्थन ।
दत्त नस्तस्य भेषजं तेना वो भुनजामहै ३ (७४)

( २५ ) मन्याविनाशनम् ।

१-३ शुनःशेपः । मन्याविनाशनम् । अनुष्टुप् ।

पञ्च च याः पञ्चाशच्च संयन्ति मन्या अभि ।
इतस्ताः सर्वा नश्यन्तु वाका अपचितामिव १

सप्त च याः सप्ततिश्च संयन्ति ग्रैव्या अभि ।
इतस्ताः सर्वा नश्यन्तु वाका अपचितामिव २ (७६)

नव च या नवतिश्च संयन्ति स्कन्ध्या अभि ।
इतस्ताः सर्वा नश्यन्तु वाका अपचितामिव　३　(७७)

(२६) पाप्मनाशनम् ।

१-३ ब्रह्मा । पाप्मा । अनुष्टुप् ।

अव मा पाप्मन्त्सृज वशी सन् मृडयासि नः ।
आ मा भद्रस्य लोके पाप्मन् धेह्यविह्रुतम्　१

यो नः पाप्मन् न जहासि तमु त्वा जहिमो वयम् ।
पथामनु व्यावर्तनेऽन्यं पाप्मानु पद्यताम्　२

अन्यत्रास्मन्न्युच्यतु सहस्राक्षो अमर्त्यः ।
यं द्वेषाम तमृच्छतु यमु द्विष्मस्तमिज्जहि　३　(८०)

(२७) अरिष्टक्षयणम् ।

१-३ भृगुः । यमः, निर्ऋतिः । जगती, २ त्रिष्टुप् ।

देवाः कपोत इषितो यदिच्छन् दूतो निर्ऋत्या इदमाजगाम ।
तस्मा अर्चाम कृणवाम निष्कृतिं शं नो अस्तु द्विपदे शं चतुष्पदे　१

शिवः कपोत इषितो नो अस्त्वनागा देवाः शकुनो गृहं नः ।
अग्निर्हि विप्रो जुषतां हविर्नः परि हेतिः पक्षिणी नो वृणक्तु　२

हेतिः पक्षिणी न दभात्यस्मानाष्ट्री पदं कृणुते अग्निधाने ।
शिवो गोभ्य उत पुरुषेभ्यो नो अस्तु मा नो देवा इह हिंसीत् कपोतः ३ (८३)

(२८) अरिष्टक्षयणम् ।

१-३ भृगुः । यमः, निर्ऋतिः । १ त्रिष्टुप्, २ अनुष्टुप्, ३ जगती ।

ऋचा कपोतं नुदत प्रणोदमिषं मदन्तः परि गां नयामः ।
संलोभयन्तो दुरिता पदानि हित्वा न ऊर्जं प्र पदात् पथिष्ठः　१

परीमेऽग्निमर्षत परीमे गामनेषत ।
देवेष्वक्रत श्रवः क इमाँ आ दधर्षति　२

यः प्रथमः प्रवतमाससाद बहुभ्यः पन्थामनुपस्पशानः ।
योऽस्येशे द्विपदो यश्चतुष्पदस्तस्मै यमाय नमो अस्तु मृत्यवे　३ (८६

( २९ ) अरिष्टक्षयणम् ।

१-३ भृगुः । यमः, निर्ऋतिः । ( बृहती ) १-२ विराण्नाम गायत्री, ३ ऽयवसाना सप्तपदा विराडष्टिः ।

अमून् हेतिः पतत्रिणी न्येतु यदुलूको वदति मोघमेतत् । यद् वा कपोतः पदमग्नौ कृणोति १
यौ ते दूतौ निर्ऋत इदमेतोऽप्रहितौ प्रहितौ वा गृहं नः । कपोतोलूकाभ्यामपदं तदस्तु । २
अवैरहत्यायेदमा पपत्यात् सुवीरताया इदमा ससद्यात् । पराङेव परा वद पराचीमनु संवतम् ।
यथा यमस्य त्वा गृहेऽरसं प्रतिचाकशानाभूकं प्रतिचाकशान् ३ (८९)

(३०) पापशमनम् ।

१-३ उपरिबभ्रवः । शमी । जगती, २ त्रिष्टुप्, ३ चतुष्पाच्छंकुमत्यनुष्टुप् ।

देवा इमं मधुना संयुतं यवं सरस्वत्यामधि मणावचर्कृषुः ।
इन्द्र आसीत् सीरपतिः शतक्रतुः कीनाशा आसन् मरुतः सुदानवः १
यस्ते मदोऽवकेशो विकेशो येनाभिहस्यं पुरुषं कृणोषि ।
आरात् त्वदन्या वनानि वृक्षि त्वं शमि शतवल्शा वि रोह २
बृहत्पलाशे सुभगे वर्षवृद्ध ऋतावरि ।
मातेव पुत्रेभ्यो मृड केशेभ्यः शमि ३ (९२)

( ३१ ) गौः ।

१-३ उपरिबभ्रवः । गौः । गायत्री ।

आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरं च प्रयन्त्स्वः १
अन्तश्चरति रोचना अस्य प्राणादपानतः । व्यख्यन्महिषः स्वः २
त्रिंशद् धामा वि राजति वाक् पतङ्गो अशिश्रियत् । प्रति वस्तोरहर्द्युभिः ३ (९५)

॥ इति तृतीयोऽनुवाकः ॥३॥

( ३२ ) यातुधानक्षयणम् ।

( १-३ ) १-२ चातनः, ३ अथर्वा । १ अग्निः, २ रुद्रः, ३ मित्रावरुणौ । त्रिष्टुप्, २ प्रस्तारपङ्क्तिः ।

[४] अन्तर्दावे जुहुता स्वे३तद् यातुधानक्षयणं घृतेन ।
आराद् रक्षांसि प्रति दह त्वमग्ने न नो गृहाणामुप तीतपासि १
रुद्रो वो ग्रीवा अशरैत् पिशाचाः पृष्टीर्वोऽपि शृणातु यातुधानाः ।
वीरुद् वो विश्वतोवीर्या यमेन समजीगमत् । २
अभयं मित्रावरुणाविहास्तु नोऽर्चिषात्रिणो नुदतं प्रतीचः ।
मा ज्ञातारं मा प्रतिष्ठां विदन्त मिथो विघ्नाना उप यन्तु मृत्युम् ३ (९८)

( ३३ ) इन्द्रस्तवः।

१-३ जाटिकायनः। इन्द्रः। गायत्री, २ अनुष्टुप्।

यस्येदमा रजो युजस्तुजे जना वनं स्वः। इन्द्रस्य रन्त्यं बृहत् १
नाधृष आ दधृषते धृषाणो धृषितः शवः। पुरा यथा व्यथिः श्रव इन्द्रस्य नाधृषे शवः २
स नो ददातु तां रयिमुरुं पिशङ्गसंदृशम्। इन्द्रः पतिस्तुविष्टमो जनेष्वा ३ (१०१)

( ३४ ) शत्रुनाशनम्।

१-५ चातनः। अग्निः। गायत्री।

प्राग्नये वाचमीरय वृषभाय क्षितीनाम् । स नः पर्षदति द्विषः १
यो रक्षांसि निजूर्वत्यग्निस्तिग्मेन शोचिषा । स नः पर्षदति द्विषः २
यः परस्याः परावतस्तिरो धन्वातिरोचते । स नः पर्षदति द्विषः ३
यो विश्वाभि विपश्यति भुवना सं च पश्यति । स नः पर्षदति द्विषः ४
यो अस्य पारे रजसः शुक्रो अग्निरजायत । स नः पर्षदति द्विषः ५ (१०६)

( ३५ ) वैश्वानरः।

१-३ कौशिकः। वैश्वानरः। गायत्री।

वैश्वानरो न ऊतय आ प्र यातु परावतः । अग्निर्नः सुष्टुतीरुप १
वैश्वानरो न आगमदिमं यज्ञं सजूरुप । अग्निरुक्थेष्वंहसु २
वैश्वानरोऽङ्गिरसां स्तोममुक्थं च चाक्लृपत् । ऐषु द्युम्नं स्वर्यमत् ३ (१०९)

( ३६ ) वैश्वानरः।

१-३ अथर्वा ( स्वस्त्ययनकामः )। अग्निः। गायत्री।

ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम् । अजस्रं घर्ममीमहे १
स विश्वा प्रति चाक्लृप ऋतूंरुत् सृजते वशी । यज्ञस्य वय उत्तिरन् २
अग्निः परेषु धामसु कामो भूतस्य भव्यस्य । सम्राडेको वि राजति ३ (११२)

( ३७ ) शापनाशनम्।

१-३ अथर्वा (स्वस्त्ययनकामः)। चन्द्रमाः। अनुष्टुप्।

उप प्रागात् सहस्राक्षो युक्त्वा शपथो रथम्।
शप्तारमन्विच्छन् मम वृक इवाविमतो गृहम् १ (११३)

परि णो वृङ्ग्धि शपथ ह्रदमग्निरिवा दहन् ।
शप्तारमत्र नो जहि दिवो वृक्षमिवाशनिः　　२
यो नः शपादशपतः शपतो यश्च नः शपात् ।
शुने पेष्ट्रमिवावक्षामं तं प्रत्यस्यामि मृत्यवे　　३　　(११५)

( ३८ ) वर्चस्यम् ।

१-४ अथर्वा ( वर्चस्कामः )। त्विषिः, (बृहस्पतिः)। त्रिष्टुप् ।

सिंहे व्याघ्र उत या पृदाकौ त्विषिरग्नौ ब्राह्मणे सूर्ये या ।
इन्द्रं या देवी सुभगा जजान सा न ऐतु वर्चसा संविदाना　　१
या हस्तिनि द्वीपिनि या हिरण्ये त्विषिरप्सु गोषु या पुरुषेषु ।
इन्द्रं या देवी सुभगा जजान सा न ऐतु वर्चसा संविदाना　　२
रथे अक्षेष्वृषभस्य वाजे वाते पर्जन्ये वरुणस्य शुष्मे ।
इन्द्रं या देवी सुभगा जजान सा न ऐतु वर्चसा संविदाना　　३
राजन्ये दुन्दुभावायतायामश्वस्य वाजे पुरुषस्य मायौ ।
इन्द्रं या देवी सुभगा जजान सा न ऐतु वर्चसा संविदाना　　४　　(११६)

( ३९ ) वर्चस्यम् ।

१-३ अथर्वा ( वर्चस्कामः )। (बृहस्पतिः), २ इन्द्रः, ३ इन्द्रः, अग्निः, सोमः । १ जगती, २ त्रिष्टुप्, ३ अनुष्टुप् ।

यशो हविर्वर्धतामिन्द्रजूतं सहस्रवीर्यं सुभृतं सहस्कृतम् ।
प्रसर्स्राणमनु दीर्घाय चक्षसे हविष्मन्तं मा वर्धय ज्येष्ठतातये　　१
अच्छा न इन्द्रं यशसं यशोभिर्यशस्विनं नमसाना विधेम ।
स नो रास्व राष्ट्रमिन्द्रजूतं तस्य ते रातौ यशसः स्याम　　२
यशा इन्द्रो यशा अग्निर्यशाः सोमो अजायत ।
यशा विश्वस्य भूतस्याहमस्मि यशस्तमः　　३　　(११२)

( ४० ) अभयम् ।

१-३ अथर्वा । १ द्यावापृथिवी, सोमः, सविता, अन्तरिक्षं, सप्तऋषयः; २ सविता, इन्द्रः; ३ इन्द्रः । १-२ जगती, ३ अनुष्टुप् ।

अभयं द्यावापृथिवी इहास्तु नोऽभयं सोमः सविता नः कृणोतु ।
अभयं नोऽस्तूर्वन्तरिक्षं सप्तऋषीणां च हविषाभयं नो अस्तु　　१　　(११३)

अस्मै ग्रामाय प्रदिशश्चतस्र ऊर्जं सुभूतं स्वस्ति सविता नः कृणोतु ।
अशत्रुविन्द्रो अभयं नः कृणोत्वन्यत्र राज्ञामभि यातु मन्युः　२
अनमित्रं नो अधरादनमित्रं न उत्तरात् ।
इन्द्रानमित्रं नः पश्चादनमित्रं पुरस्कृधि　३　(१२५)

( ४१ ) दीर्घायुःप्राप्तिः ।

१-३ ब्रह्मा । १ चन्द्रमाः, २ सरस्वती, ३ दैव्या ऋषयः । १ भुरिक्, २ अनुष्टुप् ३ त्रिष्टुप् ।

मनसे चेतसे धिय आकूतय उत चित्तये ।
मत्यै श्रुताय चक्षसे विधेम हविषा वयम्　१
अपानाय व्यानाय प्राणाय भूरिधायसे ।
सरस्वत्या उरुव्यचे विधेम हविषा वयम्　२
मा नो हासिषुर्ऋषयो दैव्या ये तनूपा ये नस्तन्वस्तनूजाः ।
अमर्त्या मर्त्याँ अभि नः सचध्वमायुर्धत्त प्रतरं जीवसे नः　३　(१२८)

॥ इति चतुर्थोऽनुवाकः ॥४॥

( ४२ ) परस्परचित्तैकीकरणम् ।

१-३ भृग्वङ्गिराः ( परस्परचित्तैकीकरणकामः )। मन्युः । १-२ भुरिक्, ३ अनुष्टुप् ।

[५] अव ज्यामिव धन्वनो मन्युं तनोमि ते हृदः ।
यथा संमनसौ भूत्वा सखायाविव सचावहै　१
सखायाविव सचावहा अव मन्युं तनोमि ते ।
अधस्ते अश्मनो मन्युमुपास्यामसि यो गुरुः　२
अभि तिष्ठामि ते मन्युं पार्ष्ण्या प्रपदेन च ।
यथावशो न वादिषो मम चित्तमुपायसि　३　(१३१)

(४३) मन्युशमनम् ।

१-३ भृग्वङ्गिराः ( परस्परचित्तैकीकरणकामः )। मन्युशमनम् । अनुष्टुप् ।

अयं दर्भो विमन्युकः स्वाय चारणाय च ।
मन्योर्विमन्युकस्यायं मन्युशमन उच्यते　१
अयं यो भूरिमूलः समुद्रमवतिष्ठति ।
दर्भः पृथिव्या उत्थितो मन्युशमन उच्यते　२
वि ते हनव्यां शरणिं वि ते मुख्यां नयामसि ।
यथावशो न वादिषो मम चित्तमुपायसि　३　(१३४)

(४४) रोगनाशनम् ।

१-३ विश्वामित्रः । वनस्पतिः । अनुष्टुप्, ३ त्रिपदा महाबृहती ।

अस्थाद् द्यौरस्थात् पृथिव्यस्थाद् विश्वमिदं जगत् ।
अस्थुर्वृक्षा ऊर्ध्वस्वप्नास्तिष्ठाद् रोगो अयं तव　　१
शतं या भेषजानि ते सहस्रं संगतानि च ।
श्रेष्ठमास्रावभेषजं वसिष्ठं रोगनाशनम्　　२
रुद्रस्य मूत्रमस्यमृतस्य नाभिः ।
विषाणका नाम वा असि पितॄणां मूलादुत्थिता वातीकृतनाशनी　　३　　(१३७)

(४५) दुःष्वप्ननाशनम् ।

१-३ अङ्गिराः प्रचेता, यमश्च । दुःष्वप्ननाशनम् । १ पथ्यापङ्क्तिः, २ भुरिक् त्रिष्टुप्, ३ अनुष्टुप् ।

परोऽपेहि मनस्पाप किमशस्तानि शंससि ।
परेहि न त्वा कामये वृक्षां वनानि सं चर गृहेषु गोषु मे मनः　　१
अवशसा निःशसा यत् पराशसोपारिम जाग्रतो यत् स्वपन्तः ।
अग्निर्विश्वान्यप दुष्कृतान्यजुष्टान्यारे अस्मद् दधातु　　२
यदिन्द्र ब्रह्मणस्पतेऽपि मृषा चरामसि ।
प्रचेता न आङ्गिरसो दुरितात् पात्वंहसः　　३　　(१४०)

(४६) दुःष्वप्ननाशनम् ।

१-३ अङ्गिराः प्रचेता यमश्च । दुःष्वप्ननाशनम् । १ विष्टारपङ्क्तिः, २ त्र्यवसाना शक्करीगर्भा पञ्चपदा जगती, ३ अनुष्टुप् ।

यो न जीवोऽसि न मृतो देवानाममृतगर्भोऽसि स्वप्न ।
वरुणानी ते माता यमः पितारुरुर्नामासि　　१
विद्म ते स्वप्न जनित्रं देवजामीनां पुत्रोऽसि यमस्य करणः ।
अन्तकोऽसि मृत्युरसि ।
तं त्वा स्वप्न तथा सं विद्म स नः स्वप्न दुष्वप्न्यात् पाहि　　२
यथा कलां यथा शफं यथर्णं संनयन्ति ।
एवा दुष्वप्न्यं सर्वं द्विषते सं नयामसि　　३　　(१४३)

( ४७ ) दीर्घायुःप्राप्तिः ।

१-३ अङ्गिराः प्रचेताः । १ अग्निः, २ विश्वे देवाः, ३ सुधन्वा । त्रिष्टुप् ।

अ॒ग्निः प्रा॑तःसव॒ने पा॑त्व॒स्मान् वै॑श्वान॒रो वि॑श्व॒कृद् वि॒श्वशं॑भूः ।
स नः॑ पाव॒को द्रवि॑णे दधा॒त्वायु॑ष्मन्तः स॒हभ॑क्षाः स्याम  १
विश्वे॑ दे॒वा म॒रुत॒ इन्द्रो॑ अ॒स्मान॒स्मिन् द्वि॒तीये॒ सव॑ने॒ न ज॑ह्युः ।
आयु॑ष्मन्तः प्रि॒यमे॑षां॒ वद॑न्तो व॒यं दे॒वानां॑ सुम॒तौ स्या॑म  २
इ॒दं तृ॒तीयं॒ सव॑नं क॒वीना॑मृ॒तेन॒ ये च॑म॒सम॒ैर॑यन्त ।
ते सौ॑धन्व॒नाः स्व॒रान॑शा॒नाः स्वि॑ष्टिं नो अ॒भि वस्यो॑ नयन्तु  ३ (१४६)

( ४८ ) स्वस्तिवाचनम् ।

१-३ अङ्गिराः, प्रचेताः । १ श्येनः, २ ऋभुः, ३ वृषा । उष्णिक् ।

श्ये॒नो॑ऽसि गाय॒त्रच्छ॑न्दा॒ अनु॑ त्वा र॑भे । स्व॒स्ति मा॒ सं व॑हास्य य॒ज्ञस्यो॒दृचि॒ स्वाहा॑ १
ऋ॒भुर॑सि॒ जग॑च्छन्दा॒ अनु॑ त्वा र॑भे । स्व॒स्ति मा॒ सं व॑हास्य य॒ज्ञस्यो॒दृचि॒ स्वाहा॑  २
वृषा॑सि त्रि॒ष्टुप्छ॑न्दा॒ अनु॑ त्वा र॑भे । स्व॒स्ति मा॒ सं व॑हास्य य॒ज्ञस्यो॒दृचि॒ स्वाहा॑  ३ (१४९)

( ४९ ) अग्निस्तवः ।

१-३ गार्ग्यः । अग्निः । १ अनुष्टुप्, २ जगती, ३ विराड्जगती ।

न॒हि ते॑ अग्ने त॒न्व॑ः क्रू॒रमा॒नंश॒ मर्त्यः॑ ।
क॒पिर्ब॑भस्ति॒ तेज॑नं॒ स्वं ज॒रायु॒ गौरि॑व  १
मे॒ष इ॑व॒ वै सं च॒ वि चो॒र्व॑च्यसे॒ यदु॑त्तर॒द्रावुप॑रश्च॒ खाद॑तः ।
शी॒र्ष्णा शिरो॒ऽप्स॒साप्सो॑ अ॒र्दय॑न्नं॒शून् ब॑भस्ति॒ हरि॑तेभिरा॒सभि॑ः  २
सु॒प॒र्णा वाच॑मक्र॒तोप॒ द्यव्या॑ख॒रे कृष्णा॑ इषि॒रा अ॑नर्तिषुः ।
नि यन्नि॒यन्त्युप॑रस्य॒ निष्कृ॑तिं पु॒रू रेतो॑ दधिरे सूर्य॒श्रितः॑  ३ (१५१)

( ५० ) अभययाचना ।

१-३ अथर्वा (अभयकामः) । अश्विनौ । १ विराड्जगती, २-३ पथ्यापङ्क्तिः ।

ह॒तं त॒र्दं स॑म॒ङ्कमा॒खुम॑श्विना छि॒न्तं शिरो॒ अपि॑ पृ॒ष्टीः शृ॑णीतम् ।
यवा॒न्नेद॒दा॒नपि॑ नह्यतं॒ मुख॒मथाभ॑यं कृणुतं धा॒न्या॑य  १ (१५३)

तर्दं है पतङ्ग है जभ्य हा उपक्वस ।
ब्रह्मेवासंस्थितं हविरनदन्त इमान् यवानहिंसन्तो अपोदित २
तर्दापते वघापते तृष्टजम्भा आ शृणोत मे ।
य आरण्या व्यद्वरा ये के च स्थ व्यद्वरास्तान्त्सर्वान् जम्भयामसि ३ (१५५)

(५१) एनोनाशनम् ।

१-३ शन्तातिः । आपः, ३ वरुणः । १ गायत्री, २ त्रिष्टुप्, ३ जगती ।

वायोः पूतः पवित्रेण प्रत्यङ् सोमो अति द्रुतः ।
इन्द्रस्य युज्यः सखा १
आपो अस्मान् मातरः सूदयन्तु घृतेन नो घृतप्वः पुनन्तु ।
विश्वं हि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरा पूत एमि २
यत् किं चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरन्ति ।
अचित्त्या चेत् तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः ३ (१५८)

[ इति त्रयोदशः प्रपाठकः ॥१३॥] ॥ इति पञ्चमोऽनुवाकः ॥५॥

(५२) भैषज्यम् ।

१-३ भागलिः । १ सूर्यः, २ गावः, ३ भेषजम् । अनुष्टुप् ।

[ अथ चतुर्दशः प्रपाठकः ॥१४॥]

[६] उत् सूर्यो दिव एति पुरो रक्षांसि निजूर्वन् । आदित्यः पर्वतेभ्यो विश्वदृष्टो अदृष्टहा १
नि गावो गोष्ठे असदन् नि मृगासो अविक्षत । न्यूर्मयो नदीनां न्यदृष्टा अलिप्सत २
आयुर्ददं विपश्चितं श्रुतां कण्वस्य वीरुधम् । आभारिषं विश्वभेषजीमस्यादृष्टान् नि शमयत् ३ (१६१)

(५३) सर्वतो रक्षणम् ।

१-३ बृहच्छुक्रः । १ द्यौः, पृथिवी, शुक्रः, सोमः, अग्निः, वायुः, सविता, १ भगः; २ वैश्वानरः; ३ त्वष्टा । त्रिष्टुप्, १ जगती ।

द्यौश्च म इदं पृथिवी च प्रचेतसौ शुक्रो बृहन् दक्षिणया पिपर्तु ।
अनु स्वधा चिकितां सोमो अग्निर्वायुर्नः पातु सविता भगश्च १
पुनः प्राणः पुनरात्मा न ऐतु पुनश्चक्षुः पुनरसुर्न ऐतु ।
वैश्वानरो नो अदब्धस्तनूपा अन्तस्तिष्ठाति दुरितानि विश्वा २ (१६३)

सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सं शिवेन ।
त्वष्टा नो अत्र वरीयः कृणोत्वनु नो मार्ष्टु तन्वो यद् विरिष्टम्    ३    (१६४)

( ५४ ) अमित्रदम्भनम् ।

१-३ ब्रह्मा । अग्नीषोमौ । अनुष्टुप् ।

इदं तद् युज उत्तरमिन्द्रं शुम्भाम्यष्टये । अस्य क्षत्रं श्रियं महीं वृष्टिरिव वर्धया तृणम् १
अस्मै क्षत्रमग्नीषोमावस्मै धारयतं रयिम् । इमं राष्ट्रस्याभीवर्गे कृणुतं युज उत्तरम्    २
सबन्धुश्चासबन्धुश्च यो अस्माँ अभिदासति । सर्वं तं रन्धयासि मे यजमानाय सुन्वते ३(१६७)

( ५५ ) सौमनस्यम् ।

१-३ ब्रह्मा । १ विश्वे देवाः, २-३ रुद्रः । जगती, २ त्रिष्टुप् ।

ये पन्थानो बहवो देवयाना अन्तरा द्यावापृथिवी संचरन्ति ।
तेषामज्यानिं यतमो वहाति तस्मै मा देवाः परि धत्तेह सर्वे    १
ग्रीष्मो हेमन्तः शिशिरो वसन्तः शरद् वर्षाः स्विते नो दधात ।
आ नो गोषु भजता प्रजायां निवात इद् वः शरणे स्याम    २
इदावत्सराय परिवत्सराय संवत्सराय कृणुता बृहन्नमः ।
तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम    ३    (१७०)

( ५६ ) सर्पेभ्यो रक्षणम् ।

१-३ शन्तातिः । १ विश्वे देवाः, २-३ रुद्रः । १ उष्णिग्गर्भा पथ्यापङ्क्तिः, २ अनुष्टुप्, ३ निचृत् ।

मा नो देवा अहिर्वधीत् सतोकान्त्सहपूरुषान् ।
संयतं न वि ष्परद् व्यात्तं न सं यमन्नमो देवजनेभ्यः    १
नमोऽस्त्वसिताय नमस्तिरश्चिराजये ।
स्वजाय बभ्रवे नमो नमो देवजनेभ्यः    २
सं ते हन्मि दता दतः समु ते हन्वा हनू ।
सं ते जिह्वया जिह्वां सम्वास्नाह आस्यम्    ३    (१७३)

( ५७ ) जलचिकित्सा ।

१-३ शन्तातिः । रुद्रः । १-२ अनुष्टुप्, ३ पथ्याबृहती ।

इदमिद् वा उ भेषजमिदं रुद्रस्य भेषजम् ।
येनेषुमेकतेजनां शतशल्यामपब्रवत्    १    (१७४)

जालाषेणाभि षिञ्चत जालाषेणोप सिञ्चत ।
जालाषमुग्रं भेषजं तेन नो मृड जीवसे २

शं च नो मयश्च नो मा च नः किं चनाममत् ।
क्षमा रपो विश्वं नो अस्तु भेषजं सर्वं नो अस्तु भेषजम् ३ (१७६)

( ५८ ) यशःप्राप्तिः ।

१-३ अथर्वा (यशस्कामः)। बृहस्पतिः; १-२ इन्द्रः, द्यावापृथिवी, सविता। ३ अग्निः, इन्द्रः, सोमः।
१ जगती, २ प्रस्तारपङ्क्तिः, ३ अनुष्टुप्।

यशसं मेन्द्रो मघवान् कृणोतु यशसं द्यावापृथिवी उभे इमे ।
यशसं मा देवः सविता कृणोतु प्रियो दातुर्दक्षिणाया इह स्याम् १

यथेन्द्रो द्यावापृथिव्योर्यशस्वान् यथाप ओषधीषु यशस्वतीः ।
एवा विश्वेषु देवेषु वयं सर्वेषु यशसः स्याम २

यशा इन्द्रो यशा अग्निर्यशाः सोमो अजायत ।
यशा विश्वस्य भूतस्याहमस्मि यशस्तमः ३ (१७९)

( ५९ ) ओषधिः ।

१-३ अथर्वा। रुद्रः, अरुन्धती ओषधिः। अनुष्टुप्।

अनडुद्भ्यस्त्वं प्रथमं धेनुभ्यस्त्वमरुन्धति ।
अधेनवे वयसे शर्म यच्छ चतुष्पदे १

शर्म यच्छत्वोषधिः सह देवीररुन्धती ।
करत् पयस्वन्तं गोष्ठमयक्ष्माँ उत पूरुषान् २

विश्वरूपां सुभगामच्छावदामि जीवलाम् ।
सा नो रुद्रस्यास्तां हेतिं दूरं नयतु गोभ्यः ३ (१८२)

( ६० ) पतिलाभः ।

१-३ अथर्वा । अर्यमा । अनुष्टुप् ।

अयमा यात्यर्यमा पुरस्ताद् विषितस्तुपः ।
अस्या इच्छन्नग्रुवै पतिमुत जायामजानये १

अश्रमदियमर्यमन्नन्यासां समनं यती ।
अङ्गो न्वर्यमन्नस्या अन्याः समनमायति २

धाता दाधार पृथिवीं धाता द्यामुत सूर्यम् ।
धातास्या अग्रुवै पतिं दधातु प्रतिकाम्यम् ३ (१८५)

(६१) विश्वस्रष्टा ।

१-३ अथर्वा । रुद्रः । १ त्रिष्टुप्, २-३ भुरिक् ।

मह्यमापो मधुमदेरयन्तां मह्यं सूरो अभरज्ज्योतिषे कम् ।
मह्यं देवा उत विश्वे तपोजा मह्यं देवः सविता व्यचो धात् ॥ १ ॥
अहं विवेच पृथिवीमुत द्यामहमृतूँरजनयं सप्त साकम् ।
अहं सत्यमनृतं यद् वदाम्यहं दैवीं परि वाचं विशश्च ॥ २ ॥
अहं जजान पृथिवीमुत द्यामहमृतूँरजनयं सप्त सिन्धून् ।
अहं सत्यमनृतं यद् वदामि यो अग्नीषोमावजुषे सखाया ॥ ३ ॥ (१८८)

॥ इति षष्ठोऽनुवाकः ॥६॥

(६२) पावमानम् ।

१-३ अथर्वा । रुद्रः, वैश्वानरः, वातः, द्यावापृथिवी । त्रिष्टुप् ।

[७] वैश्वानरो रश्मिभिर्नः पुनातु वातः प्राणेनेषिरो नभोभिः ।
द्यावापृथिवी पयसा पयस्वती ऋतावरी यज्ञिये नः पुनीताम् ॥ १ ॥
वैश्वानरीं सूनृतामा रभध्वं यस्या आशास्तन्वो वीतपृष्ठाः ।
तया गृणन्तः सधमादेषु वयं स्याम पतयो रयीणाम् ॥ २ ॥
वैश्वानरीं वर्चस आ रभध्वं शुद्धा भवन्तः शुचयः पावकाः ।
इहेडया सधमादं मदन्तो ज्योक् पश्येम सूर्यमुच्चरन्तम् ॥ ३ ॥ (१९१)

(६३) वर्चोबलप्राप्तिः ।

१-४ द्रुह्वणः । १ निर्ऋतिः, २ यमः, ३ मृत्युः, ४ अग्निः । १-३ जगती, २ अतिजगतीगर्भा, ४ अनुष्टुप् ।

यत् ते देवी निर्ऋतिराबबन्ध दाम ग्रीवास्वविमोक्यं यत् ।
तत् ते वि ष्याम्यायुषे वर्चसे बलायादोमदमन्नमद्धि प्रसूतः ॥ १ ॥
नमोऽस्तु ते निर्ऋते तिग्मतेजोऽयस्मयान् वि चृता बन्धपाशान् ।
यमो मह्यं पुनरित् त्वां ददाति तस्मै यमाय नमो अस्तु मृत्यवे ॥ २ ॥
अयस्मये द्रुपदे बेधिष इहाभिहितो मृत्युभिर्ये सहस्रम् ।
यमेन त्वं पितृभिः संविदान उत्तमं नाकमधि रोहयेमम् ॥ ३ ॥
संसमिद् युवसे वृषन्नग्ने विश्वान्यर्य आ ।
इडस्पदे समिध्यसे स नो वसून्या भर ॥ ४ ॥ (१९५)

( ६४ ) सांमनस्यम् ।

१-३ अथर्वा । सांमनस्यम्, १ विश्वे देवाः । अनुष्टुप्, ( १ त्रिष्टुप् ) ।

सं जानीध्वं सं पृच्यध्वं सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे संजानाना उपासते १
समानो मन्त्रः समितिः समानी समानं व्रतं सह चित्तमेषाम् ।
समानेन वो हविषा जुहोमि समानं चेतो अभिसंविशध्वम् २
समानी व आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वः सुसहासति ३ (१९८)

( ६५ ) शत्रुनाशनम् ।

१-३ अथर्वा । (चन्द्रमाः), इन्द्रः, पराशरः । अनुष्टुप्, १ पथ्यापङ्क्तिः ।

अव मन्युरवायताव बाहू मनोयुजा ।
पराशर त्वं तेषां पराञ्चं शुष्ममर्दयाधा नो रयिमा कृधि १
निर्हस्तेभ्यो नैर्हस्तं यं देवाः शरुमस्यथ ।
वृश्चामि शत्रूणां बाहूननेन हविषाहम् २
इन्द्रश्चकार प्रथमं नैर्हस्तमसुरेभ्यः ।
जयन्तु सत्वानो मम स्थिरेणेन्द्रेण मेदिना ३ (२०१)

( ६६ ) शत्रुनाशनम् ।

१-३ अथर्वा । इन्द्रः । अनुष्टुप्, १ त्रिष्टुप् ।

निर्हस्तः शत्रुरभिदासन्नस्तु ये सेनाभिर्युधमायन्त्यस्मान् ।
समर्पयेन्द्र महता वधेन द्रात्वेषामघहारो विविद्धः १
आतन्वाना आयच्छन्तोऽस्यन्तो ये च धावथ ।
निर्हस्ताः शत्रवः स्थनेन्द्रो वोऽद्य पराशरीत् २
निर्हस्ताः सन्तु शत्रवोऽङ्गैषां म्लापयामसि ।
अथैषामिन्द्र वेदांसि शतशो वि भजामहै ३ (२०४)

( ६७ ) शत्रुनाशनम् ।

१-३ अथर्वा । इन्द्रः । अनुष्टुप् ।

परि वर्त्मानि सर्वत इन्द्रः पूषा च सस्रतुः । मुह्यन्त्वद्यामूः सेना अमित्राणां परस्तराम् १ (२०५)

मूढा अमित्राश्चरताशीर्षाण इवाहयः । तेषां वो अग्निमूढानामिन्द्रो हन्तु वरंवरम् २
ऐषु नह्य वृषाजिनं हरिणस्या भियं कृधि । पराङमित्र एषत्वर्वाची गौरुपेषतु ३ (२०७)

( ६८ ) वपनम् ।

१-३ अथर्वा । १ सविता, आदित्याः, रुद्राः, वसवः; २ अदितिः, आपः, प्रजापतिः; ३ सविता, सोमः, वरुणः । १ पुरोविराडतिशाक्वरगर्भा चतुष्पदा जगती, २ अनुष्टुप्, ३ अतिजगतीगर्भा त्रिष्टुप् ।

आयमगन्त्सविता क्षुरेणोष्णेन वाय उदकेनेहि ।
आदित्या रुद्रा वसव उन्दन्तु सचेतसः सोमस्य राज्ञो वपत प्रचेतसः १
अदितिः श्मश्रु वपत्वाप उन्दन्तु वर्चसा ।
चिकित्सतु प्रजापतिर्दीर्घायुत्वाय चक्षसे २
येनावपत् सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् ।
तेन ब्रह्माणो वपतेदमस्य गोमानश्ववानयमस्तु प्रजावान् ३ (२१०)

( ६९ ) वर्चःप्राप्तिः ।

१-३ अथर्वा । बृहस्पतिः, अश्विनौ । अनुष्टुप् ।

गिरावरगराटेषु हिरण्ये गोषु यद् यशः । सुरायां सिच्यमानायां कीलाले मधु तन्मयि १
अश्विना सारघेण मा मधुनाङ्क्तं शुभस्पती । यथा भर्गस्वतीं वाचमावदानि जनाँ अनु २
मयि वर्चो अथो यशोऽथो यज्ञस्य यत् पयः । तन्मयि प्रजापतिर्दिवि द्यामिव दृंहतु ३ (२१३)

( ७० ) अघ्न्या ।

१-३ काङ्कायनः । अघ्न्या । जगती ।

यथा मांसं यथा सुरा यथाक्षा अधिदेवने ।
यथा पुंसो वृषण्यत स्त्रियां निहन्यते मनः ।
एवा ते अघ्न्ये मनोऽधि वत्से नि हन्यताम् १
यथा हस्ती हस्तिन्याः पदेन पदमुद्युजे ।
यथा पुंसो वृषण्यत स्त्रियां निहन्यते मनः ।
एवा ते अघ्न्ये मनोऽधि वत्से नि हन्यताम् २
यथा प्रधिर्यथोपधिर्यथा नभ्यं प्रधावधि ।
यथा पुंसो वृषण्यत स्त्रियां निहन्यते मनः ।
एवा ते अघ्न्ये मनोऽधि वत्से नि हन्यताम् ३ (२१६)

( ७१ ) अन्नम् ।

१-३ ब्रह्मा । अग्निः, ३ वैश्वानरः, देवाः । जगती, ३ त्रिष्टुप् ।

यदन्नमद्मि बहुधा विरूपं हिरण्यमश्वमुत गामजामविम् ।
यदेव किं च प्रतिजग्रहाहमग्निष्टद्धोता सुहुतं कृणोतु    १
यन्मा हुतमहुतमाजगाम दत्तं पितृभिरनुमतं मनुष्यैः ।
यस्मान्मे मन उदिव रारजीत्यग्निष्टद्धोता सुहुतं कृणोतु    २
यदन्नमद्म्यनृतेन देवा दास्यन्नदास्यन्नुत संगृणामि ।
वैश्वानरस्य महतो महिम्ना शिवं मह्यं मधुमदस्त्वन्नम्    ३    (२१९)

( ७२ ) वाजीकरणम् ।

१-३ अथर्वाङ्गिराः । शेपोऽर्कः । १ जगती, २ अनुष्टुप्, ३ भुरिक् ।

यथासितः प्रथयते वशाँ अनु वपूंषि कृण्वन्नसुरस्य मायया ।
एवा ते शेपः सहसायमर्कोऽङ्गेनाङ्गं संसमकं कृणोतु    १
यथा पसस्तायादरं वातेन स्थूलभं कृतम् ।
यावत् परस्वतः पसस्तावत् ते वर्धतां पसः    २
यावदङ्गीनं पारस्वतं हास्तिनं गार्दभं च यत् ।
यावदश्वस्य वाजिनस्तावत् ते वर्धतां पसः    ३    (२२२)

॥ इति सप्तमोऽनुवाकः ॥७॥

( ७३ ) सांमनस्यम् ।

१-३ अथर्वा । सांमनस्यम्, वरुणसोमाग्निबृहस्पतिवसवः, ३ वास्तोष्पतिः । १, ३ भुरिक्, २ त्रिष्टुप् ।

[८] एह यातु वरुणः सोमो अग्निर्बृहस्पतिर्वसुभिरेह यातु ।
अस्य श्रियमुपसंयात सर्व उग्रस्य चेत्तुः संमनसः सजाताः    १
यो वः शुष्मो हृदयेष्वन्तराकूतिर्या वो मनसि प्रविष्टा ।
तान्त्सीवयामि हविषा घृतेन मयि सजाता रमतिर्वो अस्तु    २
इहैव स्त माप याताध्यस्मत् पूषा परस्तादपथं वः कृणोतु ।
वास्तोष्पतिरनु वो जोहवीतु मयि सजाता रमतिर्वो अस्तु    ३    (२२५)

( ७४ ) सांमनस्यम् ।

१-३ अथर्वा । सांमनस्यम्, नाना देवताः, त्रिणामा । अनुष्टुप्, ३ त्रिष्टुप् ।

सं वः पृच्यन्तां तन्वः सं मनांसि समु व्रता ।
सं वोऽयं ब्रह्मणस्पतिर्भगः सं वो अजीगमत् १
संज्ञपनं वो मनसोऽथो संज्ञपनं हृदः ।
अथो भगस्य यच्छ्रान्तं तेन संज्ञपयामि वः २
यथादित्या वसुभिः संबभूवुर्मरुद्भिरुग्रा अहृणीयमानाः ।
एवा त्रिणामन्नहृणीयमान इमान् जनान्त्संमनसस्कृधीह ३ (२२८)

( ७५ ) सपत्नक्षयणम् ।

१-३ कबन्धः । इन्द्रः । अनुष्टुप्, ३ षट्पदा जगती ।

निरमुं नुद ओकसः सपत्नो यः पृतन्यति । नैर्बाध्येन हविषेन्द्र एनं पराशरीत् १
परमां तं परावतमिन्द्रो नुदतु वृत्रहा । यतो न पुनरायति शश्वतीभ्यः समाभ्यः २
एतु तिस्रः परावत एतु पञ्च जनाँ अति ।
एतु तिस्रोऽति रोचना यतो न पुनरायति शश्वतीभ्यः समाभ्यो यावत् सूर्यो असद् दिवि ३ (२३१)

( ७६ ) आयुष्यम् ।

१-४ कबन्धः । सान्तपनाग्निः । अनुष्टुप्, ३ ककुम्मती ।

य एनं परिषीदन्ति समादधति चक्षसे । संप्रेद्धो अग्निर्जिह्वाभिरुदेतु हृदयादधि १
अग्नेः सान्तपनस्याहमायुषे पदमा रभे । अद्धातिर्यस्य पश्यति धूममुद्यन्तमास्यतः २
यो अस्य समिधं वेद क्षत्रियेण समाहिताम् । नाभिह्वारे पदं नि दधाति स मृत्यवे ३
नैनं घ्नन्ति पर्यायिणो न सन्नाँ अव गच्छति । अग्नेर्यः क्षत्रियो विद्वान् नाम गृह्णात्यायुषे ४ (२३५)

( ७७ ) प्रतिष्ठापनम् ।

१-३ कबन्धः । जातवेदाः । अनुष्टुप् ।

अस्थाद् द्यौरस्थात् पृथिव्यस्थाद् विश्वमिदं जगत् ।
आस्थाने पर्वता अस्थु स्थाम्न्यश्वाँ अतिष्ठिपम् १
य उदानट् परायणं य उदानण् न्यायनम् ।
आवर्तनं निवर्तनं यो गोपा अपि तं हुवे २
जातवेदो नि वर्तय शतं ते सन्त्वावृतः ।
सहस्रं त उपावृतस्ताभिर्नः पुनरा कृधि ३ (२३८)

( ७८ ) दम्पत्यो रयिप्राप्तये प्रार्थना ।

१-३ अथर्वा । १-२ चन्द्रमाः, ३ त्वष्टा । अनुष्टुप् ।

तेन॑ भूतेन॑ ह॒विषा॒यमा प्या॑यतां॒ पुन॑ः ।
जा॒यां याम॑स्मा॒ आवा॑क्षु॒स्तां रसे॑ना॒भि व॑र्धताम्　　१
अ॒भि व॑र्धतां॒ पय॑सा॒भि रा॒ष्ट्रेण॑ वर्धताम् ।
र॒य्या स॒हस्र॑वर्चसे॒मौ स्ता॑मनु॑पक्षितौ　　२
त्वष्टा॑ जा॒याम॑जनय॒त् त्वष्टा॑स्यै॒ त्वां पति॑म् ।
त्वष्टा॑ स॒हस्र॒मायूं॑षि दी॒र्घमायु॑ः कृणोतु वाम्　　३　　(२४१)

(७९) ऊर्जःप्राप्तिः ।

१-३ अथर्वा । संस्फानम् । गायत्री, ३ त्रिपदा प्राजापत्या गायत्री ।

अ॒यं नो॒ नभ॑स॒स्पति॑ः सं॒स्फानो॑ अ॒भि र॑क्षतु । अस॑माति॑ गृ॒हेषु॑ नः १
त्वं नो॑ नभसस्पत ऊर्जं॑ गृ॒हेषु॑ धारय　। आ पु॒ष्टमे॒त्वा वसु॑　२
देव॑ संस्फान सहस्रापो॒षस्ये॑शिषे ।
तस्य॑ नो रास्व॒ तस्य॑ नो धेहि॒ तस्य॑ ते भक्ति॒वांस॑ः स्याम　३　(२४४)

( ८० ) अरिष्टक्षयणम् ।

१-३ अथर्वा । चन्द्रमाः । १ भुरिक्, २ अनुष्टुप्, ३ प्रस्तारपङ्क्तिः ।

अ॒न्तरि॑क्षेण पतति॒ विश्वा॑ भू॒ताव॒चाक॑शत् ।
शुनो॑ दि॒व्यस्य॒ यन्मह॒स्तेना॑ ते ह॒विषा॑ विधेम　　१
ये त्रय॑ः कालका॒ञ्जा दि॒वि दे॒वा इ॑व श्रि॒ताः ।
तान्त्सर्वा॑नह्व ऊ॒तये॒ऽस्मा अ॑रि॒ष्टता॑तये　　२
अ॒प्सु ते॒ जन्म॑ दि॒वि ते॑ स॒धस्थं॑ समु॒द्रे अ॒न्तर्म॑हि॒मा ते॑ पृथि॒व्याम् ।
शुनो॑ दि॒व्यस्य॒ यन्मह॒स्तेना॑ ते ह॒विषा॑ विधेम　　३　　(२४७)

( ८१ ) गर्भाधानम् ।

१-३ अथर्वा । आदित्यः, ३ त्वष्टा । अनुष्टुप् ।

य॒न्तासि॒ यच्छ॑से॒ ह॒स्ता॒वप॒ रक्षां॑सि सेधसि । प्र॒जां धनं॑ च गृह्णा॒नः परि॑ह॒स्तो अ॑भूद॒यम्　१
परि॑हस्त॒ वि धा॑रय॒ योनिं॒ गर्भा॑य॒ धात॑वे । मर्या॑दे पु॒त्रमा धे॑हि॒ तं त्वमा गम॑यागमे　२
यं परि॑ह॒स्तमबि॑भ॒रादि॑तिः पुत्रका॒म्या । त्वष्टा॒ तम॑स्या॒ आ ब॑ध्ना॒द् यथा॑ पु॒त्रं जना॒दिति॑　३ (२५०)

( ८२ ) जायाकामना ।

१-३ भगः । इन्द्रः । अनुष्टुप् ।

आगच्छ॑त आग॑तस्य॒ नाम॑ गृह्णाम्याय॒तः । इन्द्र॑स्य वृत्र॒घ्नो व॑न्वे वास॒वस्य॑ श॒तक्र॑तोः १
येन॑ सू॒र्यां सा॑वि॒त्रीम॒श्विनो॒हतुः॑ प॒था । तेन॒ माम॑ब्रवी॒द् भगो॑ जा॒यामा व॑हता॒दिति॑ २
यस्ते॑ऽङ्कु॒शो व॑सु॒दानो॑ बृ॒हन्नि॑न्द्र हिर॒ण्ययः॑ । तेना॑ जनीय॒ते जा॒यां मह्यं॑ धेहि शचीपते ३ (१५३)

॥ इति अष्टमोऽनुवाकः ॥८॥

( ८३ ) भैषज्यम् ।

१-४ भगः । १ सूर्यः, चन्द्रमाः, २ रोहिणी, ३ रामायणी । अनुष्टुप्, ४ एकावसाना द्विपदा निचृदार्च्यनुष्टुप् ।

[९] अप॑चितः॒ प्र प॑तत सुप॒र्णो व॑स॒तेरि॑व ।
सूर्यः॑ कृ॒णोतु भेष॒जं च॒न्द्रमा॒ वोऽपो॑च्छतु १
एन्ये॑का॒ श्येन्ये॑का॑ कृ॒ष्णैका॒ रोहि॑णी॒ द्वे ।
सर्वा॑सामग्र॒भं नामावी॑रघ्नी॒रपे॑तन २
अ॒सूति॑का रामा॒यण्य॑प॒चित् प्र प॑तिष्यति ।
ग्लौरि॒तः प्र प॑तिष्य॒ति स ग॑लु॒न्तो न॑शिष्यति ३
वी॒हि स्वामाहु॑तिं जु॒षाणो मन॑सा॒ स्वाहा॒ मन॑सा॒ यदि॒दं जु॒होमि॑ ४ (१५७)

( ८४ ) निर्ऋतिमोचनम् ।

१-४ भगः । निर्ऋतिः । १ भुरिग्जगती, २ त्रिपदार्षी बृहती, ३ जगती, ४ भुरिक् त्रिष्टुप् (जगती) ।

यस्या॑स्त आ॒सनि॑ घो॒रे जु॒होम्ये॒षां ब॒द्धाना॑मव॒सर्ज॑नाय॒ कम् ।
भूमि॒रिति॑ त्वाभि॒प्रम॑न्वते॒ जना॒ निर्ऋ॑ति॒रिति॑ त्वा॒हं परि॑ वेद स॒र्वतः॑ १
भूते॑ ह॒विष्म॑ती भवै॒ष ते॑ भा॒गो यो अ॒स्मासु॑ ।
मु॒ञ्चेमान॒मूनेन॑सः॒ स्वाहा॑ २
ए॒वो ष्व॑१स्मन्निर्ऋ॑तेऽने॒हा त्वम॑य॒स्मया॒न् वि चृ॑ता बन्धपा॒शान् ।
य॒मो मह्यं॑ पु॒नरित् त्वां द॑दाति॒ तस्मै॑ य॒माय॒ नमो॑ अस्तु मृ॒त्यवे॑ ३
अ॒य॒स्मये॑ द्रु॒प॒दे बे॑धिष इ॒हाभिहि॑तो मृ॒त्युभि॒र्ये स॒हस्र॑म् ।
य॒मेन॒ त्वं पि॒तृभिः॑ संवि॒दा॒न उ॑त्त॒मं नाक॒मधि॑ रोहये॒मम् ४ (१६१)

( ८५ ) यक्ष्मनाशनम् ।

१-३ अथर्वा । वनस्पतिः । अनुष्टुप् ।

वरणो वारयाता अयं देवो वनस्पतिः । यक्ष्मो यो अस्मिन्नाविष्टस्तमु देवा अवीवरन् १
इन्द्रस्य वचसा वयं मित्रस्य वरुणस्य च । देवानां सर्वेषां वाचा यक्ष्मं ते वारयामहे २
यथा वृत्र इमा आपस्तस्तम्भ विश्वधा यतीः । एवा ते अग्निना यक्ष्मं वैश्वानरेण वारये ३ (१६४)

( ८६ ) वृषकामना ।

१-३ अथर्वा । एकवृषः । अनुष्टुप् ।

वृषेन्द्रस्य वृषा दिवो वृषा पृथिव्या अयम् । वृषा विश्वस्य भूतस्य त्वमेकवृषो भव १
समुद्र ईशे स्रवतामग्निः पृथिव्या वशी । चन्द्रमा नक्षत्राणामीशे त्वमेकवृषो भव २
सम्राडस्यसुराणां ककुन्मनुष्याणाम् । देवानामर्धभागसि त्वमेकवृषो भव ३ (१६७)

( ८७ ) राज्ञः संवरणम् ।

१-३ अथर्वा । ध्रुवः । अनुष्टुप् ।

आ त्वाहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलत् ।
विशस्त्वा सर्वा वाञ्छन्तु मा त्वद् राष्ट्रमधि भ्रशत् १
इहैवैधि माप च्योष्ठाः पर्वत इवाविचाचलत् ।
इन्द्र इवेह ध्रुवस्तिष्ठेह राष्ट्रमु धारय २
इन्द्र एतमदीधरद् ध्रुवं ध्रुवेण हविषा ।
तस्मै सोमो अधि ब्रवदयं च ब्रह्मणस्पतिः ३ (१७०)

( ८८ ) ध्रुवो राजा ।

१-३ अथर्वा । ध्रुवः । अनुष्टुप्, ३ त्रिष्टुप् ।

ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत् ।
ध्रुवासः पर्वता इमे ध्रुवो राजा विशामयम् १
ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्पतिः ।
ध्रुवं त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम् २
ध्रुवोऽच्युतः प्र मृणीहि शत्रूञ्छत्रूयतोऽधरान् पादयस्व ।
सर्वा दिशः संमनसः सध्रीचीर्ध्रुवाय ते समितिः कल्पतामिह ३ (१७३)

( ८९ ) प्रीतिसंजननम्।

१-३ अथर्वा। ( रुद्रः, ) १ सोमः, २ वातः, ३ मित्रावरुणौ। अनुष्टुप्।

इदं यत् प्रेण्यः शिरो दत्तं सोमेन वृष्ण्यम्।
ततः परि प्रजातेन हार्दिं ते शोचयामसि १
शोचयामसि ते हार्दिं शोचयामसि ते मनः।
वातं धूम इव सध्र्यङ् मामेवान्वेतु ते मनः २
मह्यं त्वा मित्रावरुणौ मह्यं देवी सरस्वती।
मह्यं त्वा मध्यं भूम्या उभावन्तौ समस्यताम् ३ (२७६)

( ९० ) इषुनिष्कासनम्।

१-३ अथर्वा। रुद्रः। अनुष्टुप्, ३ आर्षी भुरिगुष्णिक्।

यां ते रुद्र इषुमास्यदङ्गेभ्यो हृदयाय च। इदं तामद्य त्वद् वयं विषूचीं वि वृहामसि १
यास्ते शतं धमनयोऽङ्गान्यनु विष्ठिताः। तासां ते सर्वासां वयं निर्विषाणि ह्वयामसि २
नमस्ते रुद्रास्यते नमः प्रतिहितायै। नमो विसृज्यमानायै नमो निपतितायै ३(२७९)

( ९१ ) यक्ष्मनाशनम्।

१-३ भृग्वङ्गिराः। यक्ष्मनाशनम्, ३ आपः। अनुष्टुप्।

इमं यवमष्टायोगैः षड्योगेभिरचर्कृषुः। तेना ते तन्वो३ रपोऽपाचीनमप व्यये १
न्यग् वातो वाति न्यक् तपति सूर्यः। नीचीनमघ्न्या दुहे न्यग् भवतु ते रपः २
आप इद् वा उ भेषजीरापो अमीवचातनीः।
आपो विश्वस्य भेषजीस्तास्ते कृण्वन्तु भेषजम् ३(२८२)

( ९२ ) वाजी।

१-३ अथर्वा। इन्द्रः, वाजी। त्रिष्टुप्, १ जगती।

वातरंहा भव वाजिन् युज्यमान इन्द्रस्य याहि प्रसवे मनोजवाः।
युञ्जन्तु त्वा मरुतो विश्ववेदस आ ते त्वष्टा पत्सु जवं दधातु १
जवस्ते अर्वन् निहितो गुहा यः श्येने वात उत योऽचरत् परीत्तः।
तेन त्वं वाजिन् बलवान् बलेनाजिं जय समने पारयिष्णुः २
तनूष्टे वाजिन् तन्वं नयन्ती वाममस्मभ्यं धावतु शर्म तुभ्यम्।
अह्रुतो महो धरुणाय देवो दिवीव ज्योतिः स्वमा मिमीयात् ३ (२८५)

॥ इति नवमोऽनुवाकः ॥९॥

( ९३ ) स्वस्त्ययनम् ।

१-३ शन्तातिः । रुद्रः, १ यमो, मृत्युः, शर्वः; २ भवः, शर्वः; ३ विश्वे देवाः, मरुतः, अग्नीषोमौ, वरुणः, वातपर्जन्यौ । त्रिष्टुप् ।

[१०] यमो मृत्युरघमारो निर्ऋथो बभ्रुः शर्वोऽस्ता नीलशिखण्डः ।
देवजनाः सेनयोत्तस्थिवांसस्ते अस्माकं परि वृञ्जन्तु वीरान् ॥ १
मनसा होमैर्हरसा घृतेन शर्वायास्त्र उत राज्ञे भवाय ।
नमस्येभ्यो नम एभ्यः कृणोम्यन्यत्रास्मदघविषा नयन्तु ॥ २
त्रायध्वं नो अघविषाभ्यो वधाद् विश्वे देवा मरुतो विश्ववेदसः ।
अग्नीषोमा वरुणः पूतदक्षा वातापर्जन्ययोः सुमतौ स्याम ॥ ३ (२८८)

( ९४ ) सांमनस्यम् ।

१-३ अथर्वाङ्गिराः । सरस्वती । अनुष्टुप्, २ विराड् जगती ।

सं वो मनांसि सं व्रता समाकूतीर्नमामसि ।
अमी ये विव्रता स्थन तान् वः सं नमयामसि ॥ १
अहं गृभ्णामि मनसा मनांसि मम चित्तमनु चित्तेभिरेत ।
मम वशेषु हृदयानि वः कृणोमि मम यातमनुवर्त्मान एत ॥ २
ओते मे द्यावापृथिवी ओता देवी सरस्वती ।
ओतौ म इन्द्रश्चाग्निश्चर्ध्यास्मेदं सरस्वति ॥ ३ (२९१)

( ९५ ) कुष्ठौषधिः ।

१-३ भृग्वङ्गिराः । वनस्पतिः । अनुष्टुप् ।

अश्वत्थो देवसदनस्तृतीयस्यामितो दिवि । तत्रामृतस्य चक्षणं देवाः कुष्ठमवन्वत ॥ १
हिरण्ययी नौरचरद्धिरण्यबन्धना दिवि । तत्रामृतस्य पुष्पं देवाः कुष्ठमवन्वत ॥ २
गर्भो असयोषधीनां गर्भो हिमवतामुत । गर्भो विश्वस्य भूतस्येमं मे अगदं कृधि ॥ ३ (२९४)

( ९६ ) चिकित्सा ।

१-३ भृग्वङ्गिराः । वनस्पतिः, ३ सोमः । अनुष्टुप्, ३ त्रिपाद्विराण्नाम गायत्री ।

या ओषधयः सोमराज्ञीर्बह्वीः शतविचक्षणाः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ॥ १
मुञ्चन्तु मा शपथ्याऽदथो वरुण्यादुत ।
अथो यमस्य पड्वीशाद् विश्वस्माद् देवकिल्बिषात् ॥ २ (२९६)

यच्चक्षुषा मनसा यच्च वाचोपारिम जाग्रतो यत् स्वपन्तः ।
सोमस्तानि स्वधया नः पुनातु  ३  (२९७)

( ९७ ) अभिभूर्वीरः ।

१-३ अथर्वा । १, ३ देवाः, २ मित्रावरुणौ । १ त्रिष्टुप् , २ जगती, ३ भुरिक् ।

अभिभूर्यज्ञो अभिभूरग्निरभिभूः सोमो अभिभूरिन्द्रः ।
अभ्य१हं विश्वाः पृतना यथासान्येवा विधेमाग्निहोत्रा इदं हविः  १
स्वधास्तु मित्रावरुणा विपश्चिता प्रजावत् क्षत्रं मधुनेह पिन्वतम् ।
बाधेथां दूरं निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुक्तमस्मत्  २
इमं वीरमनु हर्षध्वमुग्रमिन्द्रं सखायो अनु सं रभध्वम् ।
ग्रामजितं गोजितं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा  ३  (३००)

( ९८ ) अजरं क्षत्रम् ।

१-३ अथर्वा । इन्द्रः । त्रिष्टुप्, २ बृहतीगर्भास्तारपङ्क्तिः ।

इन्द्रो जयाति न परा जयाता अधिराजो राजसु राजयातै ।
चर्कृत्य ईड्यो वन्द्यश्चोपसद्यो नमस्यो॑ भवेह  १
त्वमिन्द्राधिराजः श्रवस्युस्त्वं भूरभिभूतिर्जनानाम् ।
त्वं दैवीर्विश इमा वि राजायुष्मत् क्षत्रमजरं ते अस्तु  २
प्राच्या दिशस्त्वमिन्द्रासि राजोतोदीच्या दिशो वृत्रहञ्छत्रुहोऽसि ।
यत्र यन्ति स्रोत्यास्तज्जितं ते दक्षिणतो वृषभ एषि हव्यः  ३  (३०३)

( ९९ ) संग्रामजयः ।

१-३ अथर्वा । इन्द्रः, सोमः, सविता च । अनुष्टुप्, ३ भुरिग्बृहती ( सौम्या सावित्री )।

अभि त्वेन्द्र वरिमतः पुरा त्वांहूरणाद्धुवे । ह्वयाम्युग्रं चेत्तारं पुरुणामानमेकजम् १
यो अद्य सेन्यो वधो जिघांसन् न उदीरते । इन्द्रस्य तत्र बाहू समन्तं परि दद्मः २
परि दद्म इन्द्रस्य बाहू समन्तं त्रातुस्त्रायतां नः ।
देव सवितः सोम राजन्त्सुमनसं मा कृणु स्वस्तये  ३ (३०६)

( १०० ) विषदूषणम् ।

१-३ गरुत्मान् । वनस्पतिः । अनुष्टुप् ।

देवा अदुः सूर्यो अदाद् द्यौरदात् पृथिव्यदात् ।
तिस्रः सरस्वतीरदुः सचित्ता विषदूषणम्  १ (३०७)

यद् वो देवा उपजीका आसिञ्चन् धन्वन्युदकम् । तेन देवप्रसूतेनेदं दूषयता विषम् २
असुराणां दुहितासि सा देवानामसि स्वसा । दिवस्पृथिव्याः संभूता सा चकर्थारसं विषम् ३ (३०९)

( १०१ ) वाजीकरणम् ।

१-३ अथर्वाङ्गिराः । ब्रह्मणस्पतिः । अनुष्टुप् ।

आ वृषायस्व श्वसिहि वर्धस्व प्रथयस्व च । यथाङ्गं वर्धतां शेपस्तेन योषितमिज्जहि १
येन कृशं वाजयन्ति येन हिन्वन्त्यातुरम् । तेनास्य ब्रह्मणस्पते धनुरिवा तानया पसः २
आहं तनोमि ते पसो अधि ज्यामिव धन्वनि । क्रमस्वर्श इव रोहितमनवग्लायता सदा ३ (३१२)

( १०२ ) अभिसांमनस्यम् ।

१-३ जमदग्निः । अश्विनौ । अनुष्टुप् ।

यथायं वाहो अश्विना समैति सं च वर्तते । एवा मामभि ते मनः समैतु सं च वर्तताम् १
आहं खिदामि ते मनो राजाश्वः पृष्ट्यामिव । रेष्मच्छिन्नं यथा तृणं मयि ते वेष्टतां मनः २
आञ्जनस्य मदुघस्य कुष्ठस्य नलदस्य च । तुरो भगस्य हस्ताभ्यामनुरोधनमुद्भरे ३ (३१५)

॥ इति दशमोऽनुवाकः ॥१०॥

[ इति चतुर्दशः प्रपाठकः ॥१४॥]

( १०३ ) शत्रुनाशनम् ।

१-३ उच्छोचनः । इन्द्राग्नी, १ बृहस्पतिः, सविता, मित्रोः, अर्यमा, भगः, अश्विनौ,
२-३ इन्द्रः, अग्निः । अनुष्टुप् ।

[अथ पञ्चदशः प्रपाठकः ॥१५॥]

[११] संदानं वो बृहस्पतिः संदानं सविता करत् ।
संदानं मित्रो अर्यमा संदानं भगो अश्विना १
सं परमान्त्समवमानथो सं द्यामि मध्यमान् ।
इन्द्रस्तान् पर्यहार्दाम्ना तानग्ने सं द्या त्वम् २
अमी ये युधमायन्ति केतून् कृत्वानीकशः ।
इन्द्रस्तान् पर्यहार्दाम्ना तानग्ने सं द्या त्वम् ३ (३१८)

( १०४ ) शत्रुनाशनम् ।

१-३ प्रशोचनः । इन्द्राग्नी, ३ इन्द्राग्नी, सोम इन्द्रश्च । अनुष्टुप् ।

आदानेन संदानेनामित्राना द्यामसि । अपाना ये चैषां प्राणा असुनासून्त्समच्छिदन् १
इदमादानमकरं तपसेन्द्रेण संशितम् । अमित्रा येऽत्र नः सन्ति तानग्न आ द्या त्वम् २ (३२०)

ऐनान् द्यतामिन्द्राग्नी सोमो राजा च मेदिनौ ।
इन्द्रो मरुत्वानादानममित्रेभ्यः कृणोतु नः  ३  (३२१)

( १०५ ) कासशमनम् ।

१-३ उन्मोचनः । कासा । अनुष्टुप् ।

यथा मनो मनस्केतैः परापतत्याशुमत् । एवा त्वं कासे प्र पत मनसोऽनु प्रवाय्यम्  १
यथा बाणः सुसंशितः परापतत्याशुमत् । एवा त्वं कासे प्र पत पृथिव्या अनु संवतम् २
यथा सूर्यस्य रश्मयः परापतन्त्याशुमत् । एवा त्वं कासे प्र पत समुद्रस्यानु विक्षरम् ३  (३२४)

( १०६ ) दूर्वाशाला ।

१-३ प्रमोचनः । दूर्वाशाला । अनुष्टुप् ।

आयने ते परायणे दूर्वा रोहतु पुष्पिणीः । उत्सो वा तत्र जायतां ह्रदो वा पुण्डरीकवान् १
अपामिदं न्ययनं समुद्रस्य निवेशनम् । मध्ये ह्रदस्य नो गृहाः पराचीना मुखा कृधि  २
हिमस्य त्वा जरायुणा शाले परि व्ययामसि । शीतह्रदा हि नो भुवोऽग्निष्कृणोतु भेषजम् ३  (३२७)

( १०७ ) विश्वजित् ।

१-४ शन्तातिः । विश्वजित् । अनुष्टुप् ।

विश्वजित् त्रायमाणायै मा परि देहि ।
त्रायमाणे द्विपाच्च सर्वं नो रक्ष चतुष्पाद् यच्च नः स्वम्  १
त्रायमाणे विश्वजिते मा परि देहि ।
विश्वजिद् द्विपाच्च सर्वं नो रक्ष चतुष्पाद् यच्च नः स्वम्  २
विश्वजित् कल्याण्यै मा परि देहि ।
कल्याणि द्विपाच्च सर्वं नो रक्ष चतुष्पाद् यच्च नः स्वम्  ३
कल्याणि सर्वविदे मा परि देहि ।
सर्वविद् द्विपाच्च सर्वं नो रक्ष चतुष्पाद् यच्च नः स्वम्  ४  (३३१)

( १०८ ) मेधावर्धनम् ।

१-५ शौनकः । मेधा, ४ अग्निः । अनुष्टुप्, २ उरोबृहती, ३ पथ्याबृहती ।

त्वं नो मेधे प्रथमा गोभिरश्वेभिरा गहि । त्वं सूर्यस्य रश्मिभिस्त्वं नो असि यज्ञिया  १
मेधामहं प्रथमां ब्रह्मण्वतीं ब्रह्मजूतामृषिष्टुताम् । प्रपीतां ब्रह्मचारिभिर्देवानामवसे हुवे  २ (३३३)

यां मेधामृभवो विदुर्यां मेधामसुरा विदुः । ऋषयो भद्रां मेधां यां विदुस्तां मय्या वेशयामसि ३
यामृषयो भूतकृतो मेधां मेधाविनो विदुः । तया मामद्य मेधयाग्ने मेधाविनं कृणु ४
मेधां सायं मेधां प्रातर्मेधां मध्यंदिनं परि । मेधां सूर्यस्य रश्मिभिर्वचसा वेशयामहे ५ (३३६)

( १०९ ) पिप्पली-भैषज्यम् ।

१-३ अथर्वा । पिप्पली-भैषज्यं, आयुः । अनुष्टुप् ।

पिप्पली क्षिप्तभेषज्यू३ुतातिविद्धभेषजी । तां देवाः समकल्पयन्नियं जीवितवा अलम् १
पिप्पल्यः समवदन्तायतीर्जननादधि । यं जीवमश्नवामहै न स रिष्याति पूरुषः २
असुरास्त्वा न्यखनन् देवास्त्वोदवपन् पुनः । वातीकृतस्य भेषजीमथो क्षिप्तस्य भेषजीम् ३ (३३९)

( ११० ) दीर्घायुःप्राप्तिः ।

१-३ अथर्वा । अग्निः । त्रिष्टुप्, १ पङ्क्तिः ।

प्रत्नो हि कमीड्यो अध्वरेषु सनाच्च होता नव्यश्च सत्सि ।
स्वां चाग्ने तन्वं पिप्रायस्वास्मभ्यं च सौभगमा यजस्व १
ज्येष्ठघ्न्यां जातो विचृतोर्यमस्य मूलबर्हणात् परि पाह्येनम् ।
अत्येनं नेषद् दुरितानि विश्वा दीर्घायुत्वाय शतशारदाय । २
व्याघ्रेऽह्न्यजनिष्ट वीरो नक्षत्रजा जायमानः सुवीरः ।
स मा वधीत् पितरं वर्धमानो मा मातरं प्र मिनीज्जनित्रीम् ३ (३४२)

( १११ ) उन्मत्ततामोचनम् ।

१-४ अथर्वा । अग्निः । अनुष्टुप्, १ परानुष्टुप् त्रिष्टुप् ।

इमं मे अग्ने पुरुषं मुमुग्ध्ययं यो बद्धः सुयतो लालपीति ।
अतोऽधि ते कृणवद् भागधेयं यदानुन्मदितोऽसति १
अग्निष्टे नि शमयतु यदि ते मन उद्युतम् । कृणोमि विद्वान् भेषजं यथानुन्मदितोऽससि २
देवैनसादुन्मदितमुन्मत्तं रक्षसस्परि । कृणोमि विद्वान् भेषजं यदानुन्मदितोऽसति ३
पुनस्त्वा दुरप्सरसः पुनरिन्द्रः पुनर्भगः । पुनस्त्वा दुर्विश्वे देवा यथानुन्मदितोऽससि ४ (३४६)

( ११२ ) पाशमोचनम् ।

१-३ अथर्वा । अग्निः । त्रिष्टुप् ।

मा ज्येष्ठं वधीदयमग्न एषां मूलबर्हणात् परि पाह्येनम् ।
स ग्राह्याः पाशान् वि चृत प्रजानन् तुभ्यं देवा अनु जानन्तु विश्वे । १ (३४७)

एकपाद् द्विपदो भूयो वि चक्रमे द्विपात् त्रिपादमभ्येति पश्चात् ।
चतुष्पाच्चक्रे द्विपदामभिस्वरे संपश्यन् पङ्क्तिमुपतिष्ठमानस्तस्य देवस्य ।
क्रुद्धस्यैतदागो य एवं विद्वांसं ब्राह्मणं जिनाति ।
उद् वेपय रोहित प्र क्षिणीहि ब्रह्मज्यस्य प्रति मुञ्च पाशान् २५
कृष्णायाः पुत्रो अर्जुनो रात्र्या वत्सोऽजायत ।
स ह द्यामधि रोहति रुहो रुरोह रोहितः २६ (१४)(१३२)

॥ इति तृतीयोऽनुवाकः ॥३॥

( ४ ) अध्यात्मम् ।

१-५६ ब्रह्मा । अध्यात्मम्, रोहितादित्यदैवत्यम् । त्रिष्टुप्; ( षट् पर्यायाः ) । [ १-१३ प्रथमः पर्यायः । ]
१-११ प्राजापत्याऽनुष्टुप्; १२ विराड्गायत्री; १३ आसुरी उष्णिक् ।

[४] (१) स एति सविता स्वर्दिवस्पृष्ठेऽवचाकशत् १
रश्मिभिर्नभ आभृतं महेन्द्र एत्यावृतः २
स धाता स विधर्ता स वायुर्नभ उच्छ्रितम् । रश्मिभिर्नभ आभृतं महेन्द्र एत्यावृतः ३
सोऽर्यमा स वरुणः स रुद्रः स महादेवः । रश्मिभिर्नभ आभृतं महेन्द्र एत्यावृतः ४
सो अग्निः स उ सूर्यः स उ एव महायमः । रश्मिभिर्नभ आभृतं महेन्द्र एत्यावृतः ५
तं वत्सा उप तिष्ठन्त्येकशीर्षाणो युता दश । रश्मिभिर्नभ आभृतं महेन्द्र एत्यावृतः ६
पश्चात् प्राञ्च आ तन्वन्ति यदुदेति वि भासति । रश्मिभिर्नभ आभृतं महेन्द्र एत्यावृतः ७
तस्यैष मारुतो गणः स एति शिक्याकृतः ८
रश्मिभिर्नभ आभृतं महेन्द्र एत्यावृतः ९
तस्येमे नव कोशा विष्टम्भा नवधा हिताः १०
स प्रजाभ्यो वि पश्यति यच्च प्राणति यच्च न ११
तमिदं निगतं सहः स एष एक एकवृदेक एव १२
एते अस्मिन् देवा एकवृतो भवन्ति १३ (१५) (१४५)

( ५ ) अध्यात्मम् ।

१-८ [ १४-२१ द्वितीयः पर्यायः ] १४ भुरिक्साम्नी त्रिष्टुप्; १५ आसुरी पङ्क्तिः,
१६, १९ प्राजापत्याऽनुष्टुप्; १७-१८ आसुरी गायत्री ।

(२) कीर्तिश्च यशश्चाम्भश्च नभश्च ब्राह्मणवर्चसं चान्नं चान्नाद्यं च १४
य एतं देवमेकवृतं वेद १५
न द्वितीयो न तृतीयश्चतुर्थो नाप्युच्यते । य एतं देवमेकवृतं वेद १६ (१४८)

न पञ्चमो न षष्ठः सप्तमो नाप्युच्यते । य एतं देवमेकवृतं वेद १७
नाष्टमो न नवमो दशमो नाप्युच्यते । य एतं देवमेकवृतं वेद १८
स सर्वस्मै वि पश्यति यच्च प्राणति यच्च न । य एतं देवमेकवृतं वेद १९
तमिदं निगतं सहः स एष एक एकवृदेक एव । य एतं देवमेकवृतं वेद २०
सर्वे अस्मिन् देवा एकवृतो भवन्ति । य एतं देवमेकवृतं वेद २१ (१६) (१५३)

(६) अध्यात्मम् ।

१-७ [२२-२८ तृतीयः पर्यायः] २२,२४ भुरिक्प्राजापत्या त्रिष्टुप्; २३ आर्ची गायत्री; २५ एकपदाऽऽसुरी गायत्री; २६ आर्ची अनुष्टुप्; २७-२८ प्राजापत्याऽनुष्टुप् ।

(३) ब्रह्म च तपश्च कीर्तिश्च यशश्चाम्भश्च नभश्च ब्राह्मणवर्चसं चान्नं चान्नाद्यं च ।
य एतं देवमेकवृतं वेद २२
भूतं च भव्यं च श्रद्धा च रुचिश्च स्वर्गश्च स्वधा च २३
य एतं देवमेकवृतं वेद २४
स एव मृत्युः सोऽमृतं सोऽभ्वं स रक्षः २५
स रुद्रो वसुवनिर्वसुदेये नमोवाके वषट्कारोऽनु संहितः २६
तस्येमे सर्वे यातव उप प्रशिषमासते २७
तस्यामू सर्वा नक्षत्रा वशे चन्द्रमसा सह २८ (१७) (१६०)

(७) अध्यात्मम् ।

१-१७ [२९-४५ चतुर्थः पर्यायः] २९,३३, ३९-४०,४५ आसुरी गायत्री; ३०,३२,३५-३६,४२ प्राजापत्याऽनुष्टुप्; ३१ विराड् गायत्री; ३४, साम्नी उष्णिक्; ३७-३८ साम्नी उष्णिगनुष्टुप्; ४१ साम्नी बृहती; ४३ आर्षी गायत्री; ४४ साम्नी अनुष्टुप् ।

(४) स वा अह्नोऽजायत तस्मादहरजायत २९
स वै रात्र्या अजायत तस्माद् रात्रिरजायत ३०
स वा अन्तरिक्षादजायत तस्मादन्तरिक्षमजायत ३१
स वै वायोरजायत तस्माद् वायुरजायत ३२
स वै दिवोऽजायत तस्माद् द्यौरध्यजायत ३३
स वै दिग्भ्योऽजायत तस्माद् दिशोऽजायन्त ३४
स वै भूमेरजायत तस्माद् भूमिरजायत ३५
स वा अग्नेरजायत तस्मादग्निरजायत ३६
स वा अद्भ्योऽजायत तस्मादापोऽजायन्त ३७
स वा ऋग्भ्योऽजायत तस्मादृचोऽजायन्त ३८ (१७०)

स वै यज्ञादजायत तस्माद् यज्ञोऽजायत   ३९
स यज्ञस्तस्य यज्ञः स यज्ञस्य शिरस्कृतम्   ४०
स स्तनयति स वि द्योतते स उ अश्मानमस्यति   ४१
पापाय वा भद्राय वा पुरुषायासुराय वा   ४२
यद् वा कृणोष्योषधीर्यद् वा वर्षसि भद्रया यद् वा जन्यमवीवृधः   ४३
तावांस्ते मघवन् महिमोपो ते तन्वः शतम्   ४४
उपो ते बध्वे बद्धानि यदि वासि न्यर्बुदम्   ४५ (१८) (१७७)

( ८ ) अध्यात्मम् ।

१-६ [ ४६-५१ पञ्चमः पर्यायः ] ४६ आसुरी गायत्री; ४७ यवमध्या गायत्री; ४८ साम्नी उष्णिक्; ४९ निचृत्साम्नी बृहती; ५० प्राजापत्याऽनुष्टुप्; ५१ विराड्गायत्री ।

(५) भूयानिन्द्रो नमुराद् भूयानिन्द्रासि मृत्युभ्यः   ४६
भूयानरात्याः शच्याः पतिस्त्वमिन्द्रासि विभूः प्रभूरिति त्वोपास्महे वयम्   ४७
नमस्ते अस्तु पश्यत पश्य मा पश्यत   ४८
अन्नाद्येन यशसा तेजसा ब्राह्मणवर्चसेन   ४९
अम्भो अमो महः सह इति त्वोपास्महे वयम् । नमस्ते० । अन्नाद्येन०   ५०
अम्भो अरुणं रजतं रजः सह इति त्वोपास्महे वयम् । नमस्ते० । अन्ना०   ५१ (१९) (१८३)

( ९ ) अध्यात्मम् ।

१-५ [ ५२-५६ षष्ठः पर्यायः ] ५२-५३ प्राजापत्याऽनुष्टुप्; ५४ द्विपदाऽऽर्षी गायत्री ।

(६) उरुः पृथुः सुभूर्भुव इति त्वोपास्महे वयम् । नमस्ते० । अन्नाद्येन०   ५२
प्रथो वरो व्यचो लोक इति त्वोपास्महे वयम् । नमस्ते० । अन्नाद्येन०   ५३
भवद्वसुरिदद्वसुः संयद्वसुरायद्वसुरिति त्वोपास्महे वयम्   ५४
नमस्ते अस्तु पश्यत पश्य मा पश्यत   ५५
अन्नाद्येन यशसा तेजसा ब्राह्मणवर्चसेन   ५६ (२०) (१८८)

[ इत्यष्टाविंशः प्रपाठकः ॥२८॥]

॥ इति चतुर्थोऽनुवाकः ॥४॥

॥ इति त्रयोदशं काण्डं समाप्तम् ॥

मन्त्रसंख्या—

| | |
|---|---|
| द्वादशकाण्डस्यान्तपर्यन्तं | ३६०३ |
| त्रयोदशकाण्डस्य ... | १८८ |
| सर्वयोगः | ३७९१ |

# चतुर्दशं काण्डम् ।

## ( १. ) विवाह-प्रकरणम् ।

१-६४ सूर्या सावित्री । आत्मा; १-५ सोमः, ६ स्वविवाहः, २३ सोमार्कौ, २४ चन्द्रमाः, २५ नृणां विवाहमन्त्राशिषः; २५, २७ वधूवासःसंस्पर्शमोचनम् । अनुष्टुप्, १४ विराट्प्रस्तारपङ्क्तिः; १५ आस्तारपङ्क्तिः; १९-२०, २३-२४, ३१-३३, ३७, ३९-४०, ४५, ४७, ४९-५०, ५३, ५६-५७, ५८-५९, ६१ त्रिष्टुप् ( २३, ३१, ४५ बृहतीगर्भा ); २१, ४६, ५४, ६४ जगती (५४, ६४ भुरिक् त्रिष्टुप्); २९, ५५ पुरस्ताद्बृहती; ३४ प्रस्तारपङ्क्तिः; ३८ पुरोबृहती त्रिपदा परोष्णिक्; ( ४८ पथ्यापङ्क्तिः ) ६० पराऽनुष्टुप् ।

[ अथैकोनत्रिंशः प्रपाठकः ॥२९॥ ]

[१] सत्येनोत्तभिता भूमिः सूर्येणोत्तभिता द्यौः । ऋतेनादित्यास्तिष्ठन्ति दिवि सोमो अधि श्रितः १
सोमेनादित्या बलिनः सोमेन पृथिवी मही । अथो नक्षत्राणामेषामुपस्थे सोम आहितः २
सोमं मन्यते पपिवान् यत् संपिंषन्त्योषधिम् ।
सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति पार्थिवः ३
यत् त्वा सोम प्रपिबन्ति तत आ प्यायसे पुनः ।
वायुः सोमस्य रक्षिता समानां मास आकृतिः ४
आच्छद्विधानैर्गुपितो बार्हतैः सोम रक्षितः ।
ग्राव्णामिच्छृण्वन् तिष्ठसि न ते अश्नाति पार्थिवः ५
चित्तिरा उपबर्हणं चक्षुरा अभ्यञ्जनम् । द्यौर्भूमिः कोश आसीद् यदयात् सूर्या पतिम् ६
रैभ्यासीदनुदेयी नाराशंसी न्योचनी । सूर्याया भद्रमिद् वासो गाथयैति परिष्कृता ७
स्तोमा आसन् प्रतिधयः कुरीरं छन्द ओपशः ।
सूर्याया अश्विना वराग्निरासीत् पुरोगवः ८
सोमो वधूयुरभवदश्विनास्तामुभा वरा । सूर्यां यत् पत्ये शंसन्तीं मनसा सवितादात् ९
मनो अस्या अन आसीद् द्यौरासीदुत च्छदिः ।
शुक्रावनड्वाहावास्तां यदयात् सूर्या पतिम् १० (१)
ऋक्सामाभ्यामभिहितौ गावौ ते सामनावैताम् । श्रोत्रे ते चक्रे आस्तां दिवि पन्थाश्चराचरः ११
शुची ते चक्रे यात्या व्यानो अक्ष आहतः । अनो मनस्मयं सूर्यारोहत् प्रयती पतिम् १२
सूर्याया वहतुः प्रागात् सविता यमवासृजत् । मघासु हन्यन्ते गावः फल्गुनीषु व्युह्यते १३ (१३)

यदश्विना पृच्छमानावयातं त्रिचक्रेण वहतुं सूर्यायाः ।
क्वैकं चक्रं वामासीत् क्व देष्ट्राय तस्थथुः १४

यदयातं शुभस्पती वरेयं सूर्यामुप ।
विश्वे देवा अनु तद् वामजानन् पुत्रः पितरमवृणीत पूषा १५

द्वे ते चक्रे सूर्ये ब्रह्माण ऋतुथा विदुः । अथैकं चक्रं यद् गुहा तदद्धातय इद् विदुः १६

अर्यमणं यजामहे सुबन्धुं पतिवेदनम् । उर्वारुकमिव बन्धनात् प्रेतो मुञ्चामि नामुतः १७

प्रेतो मुञ्चामि नामुतः सुबद्धाममुतस्करम् । यथेयमिन्द्र मीढ्वः सुपुत्रा सुभगासति १८

प्र त्वा मुञ्चामि वरुणस्य पाशाद् येन त्वाबध्नात् सविता सुशेवाः ।
ऋतस्य योनौ सुकृतस्य लोके स्योनं ते अस्तु सहसंभलायै १९

भगस्त्वेतो नयतु हस्तगृह्याश्विना त्वा प्र वहतां रथेन ।
गृहान् गच्छ गृहपत्नी यथासो वशिनी त्वं विदथमा वदासि २० (२)

इह प्रियं प्रजायै ते समृध्यतामस्मिन् गृहे गार्हपत्याय जागृहि ।
एना पत्या तन्वं सं स्पृशस्वाथ जिर्विर्विदथमा वदासि २१

इहैव स्तं मा वि यौष्टं विश्वमायुर्व्यश्नुतम् ।
क्रीडन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वस्तकौ २२

पूर्वापरं चरतो माययैतौ शिशू क्रीडन्तौ परि यातोऽर्णवम् ।
विश्वान्यो भुवना विचष्ट ऋतूँरन्यो विदधज्जायसे नवः २३

नवोनवो भवसि जायमानोऽह्नां केतुरुषसामेष्यग्रम् ।
भागं देवेभ्यो वि दधास्यायन् प्र चन्द्रमस्तिरसे दीर्घमायुः २४

परा देहि शामुल्यं ब्रह्मभ्यो वि भजा वसु ।
कृत्यैषा पद्वती भूत्वा जाया विशते पतिम् २५

नीललोहितं भवति कृत्यासक्तिर्व्यज्यते ।
एधन्ते अस्या ज्ञातयः पतिर्बन्धेषु बध्यते २६

अश्लीला तनूर्भवति रुशती पापयामुया ।
पतिर्यद् वध्वो वाससः स्वमङ्गमभ्यूर्णुते २७

आशसनं विशसनमथो अधिविकर्तनम् ।
सूर्यायाः पश्य रूपाणि तानि ब्रह्मोत शुम्भति २८ (२८)

तृष्टमेतत् कटुकमपाष्ठवद् विषवन्नैतदत्तवे ।
सूर्यां यो ब्रह्मा वेद स इद् वाधूयमर्हति २९
स इत् तत् स्योनं हरति ब्रह्मा वासः सुमङ्गलम् ।
प्रायश्चित्तिं यो अध्येति येन जाया न रिष्यति ३०(३)
युवं भगं सं भरतं समृद्धमृतं वदन्तावृतोद्येषु ।
ब्रह्मणस्पते पतिमस्यै रोचय चारु संभलो वदतु वाचमेताम् ३१
इहेदसाथ न परो गमाथेमं गावः प्रजया वर्धयाथ ।
शुभं यतीरुस्रियाः सोमवर्चसो विश्वे देवाः क्रन्निह वो मनांसि ३२
इमं गावः प्रजया सं विशाथायं देवानां न मिनाति भागम् ।
अस्मै वः पूषा मरुतश्च सर्वे अस्मै वो धाता सविता सुवाति ३३
अनृक्षरा ऋजवः सन्तु पन्थानो येभिः सखायो यन्ति नो वरेयम् ।
सं भगेन समर्यम्णा सं धाता सृजतु वर्चसा ३४
यच्च वर्चो अक्षेषु सुरायां च यदाहितम् । यद् गोष्वश्विना वर्चस्तेनेमां वर्चसावतम् ३५
येन महानघ्न्या जघनमश्विना येन वा सुरा ।
येनाक्षा अभ्यषिच्यन्त तेनेमां वर्चसावतम् ३६
यो अनिध्मो दीदयदप्स्व१न्तर्यं विप्रास ईडते अध्वरेषु ।
अपां नपान्मधुमतीरपो दा याभिरिन्द्रो वावृधे वीर्या॑वान् ३७
इदमहं रुशन्तं ग्राभं तनूदूषिमपोहामि । यो भद्रो रोचनस्तमुदचामि ३८
आस्यै ब्राह्मणाः स्नपनीर्हरन्त्ववीरघ्नीरुदजन्त्वापः ।
अर्यम्णो अग्निं पर्येतु पूषन् प्रतीक्षन्ते श्वशुरो देवरश्च ३९
शं ते हिरण्यं शमु सन्त्वापः शं मेथिर्भवतु शं युगस्य तर्द्म ।
शं त आपः शतपवित्रा भवन्तु शमु पत्या तन्व१ं सं स्पृशस्व ४०(४)
खे रथस्य खेऽनसः खे युगस्य शतक्रतो । अपालामिन्द्र त्रिष्पूत्वाकृणोः सूर्यत्वचम् ४१
आशासाना सौमनसं प्रजां सौभाग्यं रयिम् । पत्युरनुव्रता भूत्वा सं नह्यस्वामृताय कम् ४२
यथा सिन्धुर्नदीनां साम्राज्यं सुषुवे वृषा । एवा त्वं सम्राज्ञ्येधि पत्युरस्तं परेत्य ४३
सम्राज्ञ्येधि श्वशुरेषु सम्राज्ञ्युत देवृषु । ननान्दुः सम्राज्ञ्येधि सम्राज्ञ्युत श्वश्र्वाः ४४
या अकृन्तन्नवयन् याश्च तत्निरे या देवीरन्ताँ अभितोऽददन्त ।
तास्त्वा जरसे सं व्ययन्त्वायुष्मतीदं परि धत्स्व वासः ४५(४५)

जीवं रुदन्ति वि नयन्त्यध्वरं दीर्घामनु प्रसितिं दीध्युर्नरः ।
वामं पितृभ्यो य इदं समीरिरे मयः पतिभ्यो जनये परिष्वजे ४६

स्योनं ध्रुवं प्रजायै धारयामि तेऽश्मानं देव्याः पृथिव्या उपस्थे ।
तमा तिष्ठानुमाद्या सुवर्चा दीर्घं त आयुः सविता कृणोतु ४७

येनाग्निरस्या भूम्या हस्तं जग्राह दक्षिणम् ।
तेन गृह्णामि ते हस्तं मा व्यथिष्ठा मया सह प्रजया च धनेन च ४८

देवस्ते सविता हस्तं गृह्णातु सोमो राजा सुप्रजसं कृणोतु ।
अग्निः सुभगां जातवेदाः पत्ये पत्नीं जरदष्टिं कृणोतु ४९

गृह्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथासः ।
भगो अर्यमा सविता पुरंधिर्मह्यं त्वादुर्गार्हपत्याय देवाः ५० (५)

भगस्ते हस्तमग्रहीत् सविता हस्तमग्रहीत् । पत्नी त्वमसि धर्मणाहं गृहपतिस्तव ५१

ममेयमस्तु पोष्या मह्यं त्वादाद् बृहस्पतिः ।
मया पत्या प्रजावति सं जीव शरदः शतम् ५२

त्वष्टा वासो व्यदधाच्छुभे कं बृहस्पतेः प्रशिषा कवीनाम् ।
तेनेमां नारीं सविता भगश्च सूर्यामिव परि धत्तां प्रजया ५३

इन्द्राग्नी द्यावापृथिवी मातरिश्वा मित्रावरुणा भगो अश्विनोभा ।
बृहस्पतिर्मरुतो ब्रह्म सोम इमां नारीं प्रजया वर्धयन्तु ५४

बृहस्पतिः प्रथमः सूर्यायाः शीर्षे केशाँ अकल्पयत् ।
तेनेमामश्विना नारीं पत्ये सं शोभयामसि ५५

इदं तद् रूपं यदवस्त योषा जायां जिज्ञासे मनसा चरन्तीम् ।
तामन्वर्तिष्ये सखिभिर्नवग्वैः क इमान् विद्वान् वि चचर्त पाशान् ५६

अहं वि ष्यामि मयि रूपमस्या वेददित् पश्यन् मनसः कुलायम् ।
न स्तेयमद्मि मनसोदमुच्ये स्वयं श्रथ्नानो वरुणस्य पाशान् ५७

प्र त्वा मुञ्चामि वरुणस्य पाशाद् येन त्वाबध्नात् सविता सुशेवाः ।
उरुं लोकं सुगमत्र पन्थां कृणोमि तुभ्यं सहपत्न्यै वधु ५८

उद्यच्छध्वमप रक्षो हनाथेमां नारीं सुकृते दधात ।
धाता विपश्चित् पतिमस्यै विवेद भगो राजा पुर एतु प्रजानन् ५९ (६)

भर्गस्ततक्ष चतुरः पादान् भर्गस्ततक्ष चत्वार्युष्पलानि ।
त्वष्टा पिपेश मध्यतोऽनु वर्ध्रान्त्सा नो अस्तु सुमङ्गली ६०
सुकिंशुकं वहतुं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम् ।
आ रोह सूर्ये अमृतस्य लोकं स्योनं पतिभ्यो वहतुं कृणु त्वम् ६१
अभ्रातृघ्नीं वरुणापशुघ्नीं बृहस्पते ।
इन्द्रापतिघ्नीं पुत्रिणीमास्मभ्यं सवितर्वह ६२
मा हिंसिष्टं कुमार्यं१ स्थूणे देवकृते पथि ।
शालाया देव्या द्वारं स्योनं कृण्मो वधूपथम् ६३
ब्रह्मापरं युज्यतां ब्रह्म पूर्वं ब्रह्मान्ततो मध्यतो ब्रह्म सर्वतः ।
अनाव्याधां देवपुरां प्रपद्य शिवा स्योना पतिलोके वि राज ६४ (६) (६४)

॥ इति प्रथमोऽनुवाकः ॥१॥

( १ ) विवाह-प्रकरणम् ।

१-७५ सूर्या सावित्री । आत्मा, १० यक्ष्मनाशनी, ११ दम्पत्योः परिपन्थिनाशनी, ३६ देवाः । अनुष्टुप्, ५-६, १२, ३१, ३७, ३९-४० जगती (३७, ३९ भुरिक् त्रिष्टुप्); ९ त्र्यवसाना षट्पदा विराडत्यष्टिः; १३-१४, १७-१९, ३४. ३६, ३८, ४१-४२, ४९, ६१, ७०, ७४-७५ त्रिष्टुप्; १५, ५१ भुरिक्; २० पुरस्ताद्बृहती; १३, २४-२५, ३२-३३ पुरोबृहती (२६ त्रिपदा विराण्णाम गायत्री); ३३ विराडास्तारपङ्क्तिः; ३५ पुरोबृहती त्रिष्टुप्; ४३ त्रिष्टुब्गर्भा पङ्क्तिः; ४४ प्रस्तारपङ्क्तिः; ४७ पथ्या-बृहती; ४८ सतः पङ्क्तिः, ५० उपरिष्टाद्बृहती निचृत्; ५२ विराद् पुर उष्णिक्; ५९-६०, ६२ पथ्यापङ्क्तिः; ६८ पुर उष्णिक्; ६९ त्र्यवसाना षट्पदाऽतिशक्वरी; ७१ बृहती ।

[२] तुभ्यमग्रे पर्यवहन्त्सूर्यां वहतुना सह । स नः पतिभ्यो जायां दा अग्ने प्रजया सह १
पुनः पत्नीमग्निरदादायुषा सह वर्चसा । दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम् २
सोमस्य जाया प्रथमं गन्धर्वस्तेऽपरः पतिः । तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ३
सोमो ददद् गन्धर्वाय गन्धर्वो ददद्ग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ४
आ वामगन्त्सुमतिर्वाजिनीवसू न्यश्विना हृत्सु कामा अरंसत ।
अभूतं गोपा मिथुना शुभस्पती प्रिया अर्यम्णो दुर्यां अशीमहि ५
सा मन्दसाना मनसा शिवेन रयिं धेहि सर्ववीरं वचस्यम् ।
सुगं तीर्थं सुप्रपाणं शुभस्पती स्थाणुं पथिष्ठामप दुर्मतिं हतम् ६ (७०)

या ओषधयो या नद्योऽ यानि क्षेत्राणि या वना।
तास्त्वा वधु प्रजावतीं पत्ये रक्षन्तु रक्षसः ७
एमं पन्थामरुक्षाम सुगं स्वस्तिवाहनम्। यस्मिन् वीरो न रिष्यत्यन्येषां विन्दते वसु ८
इदं सु मे नरः शृणुत ययाशिषा दंपती वाममश्नुतः।
ये गन्धर्वा अप्सरसश्च देवीरेषु वानस्पत्येषु येऽधि तस्थुः।
स्योनास्ते अस्यै वध्वै भवन्तु मा हिंसिषुर्वहतुमुह्यमानम् ९
ये वध्वश्चन्द्रं वहतुं यक्ष्मा यन्ति जनाँ अनु।
पुनस्तान् यज्ञिया देवा नयन्तु यत आगताः १० (७)
मा विदन् परिपन्थिनो य आसीदन्ति दंपती। सुगेन दुर्गमतीतामप द्रान्त्वरातयः ११
सं काशयामि वहतुं ब्रह्मणा गृहैरघोरेण चक्षुषा मित्रियेण।
पर्याणद्धं विश्वरूपं यदस्ति स्योनं पतिभ्यः सविता तत् कृणोतु १२
शिवा नारीयमस्तमागन्निमं धाता लोकमस्यै दिदेश।
तामर्यमा भगो अश्विनोभा प्रजापतिः प्रजया वर्धयन्तु १३
आत्मन्वत्युर्वरा नारीयमागन् तस्यां नरो वपत बीजमस्याम्।
सा वः प्रजां जनयद् वक्षणाभ्यो बिभ्रती दुग्धमृषभस्य रेतः १४
प्रति तिष्ठ विराडसि विष्णुरिवेह सरस्वति।
सिनीवालि प्र जायतां भगस्य सुमतावसत् १५
उद् व ऊर्मिः शम्या हन्त्वापो योक्त्राणि मुञ्चत।
मादुष्कृतौ व्येनसावघ्न्यावशुनमारताम् १६
अघोरचक्षुरपतिघ्नी स्योना शग्मा सुशेवा सुयमा गृहेभ्यः।
वीरसूर्देवकामा सं त्वयैधिषीमहि सुमनस्यमाना १७
अदेवृघ्न्यपतिघ्नीहैधि शिवा पशुभ्यः सुयमा सुवर्चाः।
प्रजावती वीरसूर्देवकामा स्योनेममग्निं गार्हपत्यं सपर्य १८
उत् तिष्ठेतः किमिच्छन्तीदमागा अहं त्वेडे अभिभूः स्वाद् गृहात्।
शून्यैषी निर्ऋते याजगन्थोत्तिष्ठाराते प्र पत मेह रंस्थाः १९
यदा गार्हपत्यमसपर्यैत् पूर्वमग्निं वधूरियम्।
अधा सरस्वत्यै नारि पितृभ्यश्च नमस्कुरु २० (८) (४७)

शर्म वर्मैतदा हरास्यै नार्या उपस्तरे ।
सिनीवालि प्र जायतां भगस्य सुमतावसत् २१

यं बल्बजं न्यस्यथ चर्म चोपस्तृणीथन ।
तदा रोहतु सुप्रजा या कन्या विन्दते पतिम् २२

उप स्तृणीहि बल्बजमधि चर्मणि रोहिते ।
तत्रोपविश्य सुप्रजा इममग्निं सपर्यतु २३

आ रोह चर्मोप सीदाग्निमेष देवो हन्ति रक्षांसि सर्वा ।
इह प्रजां जनय पत्ये अस्मै सुज्यैष्ठ्यो भवत् पुत्रस्त एषः २४

वि तिष्ठन्तां मातुरस्या उपस्थान्नानारूपाः पशवो जायमानाः ।
सुमङ्गल्युप सीदेममग्निं संपत्नी प्रति भूषेह देवान् २५

सुमङ्गली प्रतरणी गृहाणां सुशेवा पत्ये श्वशुराय शंभूः ।
स्योना श्वश्र्वै प्र गृहान् विशेमान् २६

स्योना भव श्वशुरेभ्यः स्योना पत्ये गृहेभ्यः ।
स्योनास्यै सर्वस्यै विशे स्योना पुष्टायैषां भव २७

सुमङ्गलीरियं वधूरिमां समेत पश्यत ।
सौभाग्यमस्यै दत्त्वा दौर्भाग्यैर्विपरेतन २८

या दुर्हार्दो युवतयो याश्चेह जरतीरपि ।
वर्चो न्व१स्यै सं दत्ताथास्तं विपरेतन २९

रुक्मप्रस्तरणं वह्यं विश्वा रूपाणि बिभ्रतम् ।
आरोहत् सूर्या सावित्री बृहते सौभगाय कम् ३० (९)

आ रोह तल्पं सुमनस्यमानेह प्रजां जनय पत्ये अस्मै ।
इन्द्राणीव सुबुधा बुध्यमाना ज्योतिरग्रा उषसः प्रति जागरासि ३१

देवा अग्रे न्यपद्यन्त पत्नीः समस्पृशन्त तन्वस्तनूभिः ।
सूर्येव नारि विश्वरूपा महित्वा प्रजावती पत्या सं भवेह ३२

उत् तिष्ठेतो विश्वावसो नमसेडामहे त्वा ।
जामिमिच्छ पितृषदं न्यक्तां स ते भागो जनुषा तस्य विद्धि ३३

अप्सरसः सधमादं मदन्ति हविर्धानमन्तरा सूर्यं च ।
तास्ते जनित्रमभि ताः परेहि नमस्ते गन्धर्वर्तुना कृणोमि ३४ (१०)

नमो गन्धर्वस्य नमसे नमो भामाय चक्षुषे च कृण्मः ।
विश्वावसो ब्रह्मणा ते नमोऽभि जाया अप्सरसः परेहि ३५
राया वयं सुमनसः स्यामोदितो गन्धर्वमावीवृताम ।
अगन्त्स देवः परमं सधस्थमगन्म यत्र प्रतिरन्त आयुः ३६
सं पितरावृत्विये सृजेथां माता पिता च रेतसो भवाथः ।
मर्य इव योषामधिरोहयैनां प्रजां कृण्वाथामिह पुष्यतं रयिम् ३७
तां पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या३ वपन्ति ।
या न ऊरू उशती विश्रयाति यस्यामुशन्तः प्रहरेम शेपः ३८
आ रोहोरुमुप धत्स्व हस्तं परि ष्वजस्व जायां सुमनस्यमानः ।
प्रजां कृण्वाथामिह मोदमानौ दीर्घं वामायुः सविता कृणोतु ३९
आ वां प्रजां जनयतु प्रजापतिरहोरात्राभ्यां समनक्त्वर्यमा ।
अदुर्मङ्गली पतिलोकमा विशेमं शं नो भव द्विपदे शं चतुष्पदे ४० (१०)
देवैर्दत्तं मनुना साकमेतद् वाधूयं वासो वध्वश्च वस्त्रम् ।
यो ब्रह्मणे चिकितुषे ददाति स इद् रक्षांसि तल्पानि हन्ति ४१
यं मे दत्तो ब्रह्मभागं वधूयोर्वाधूयं वासो वध्वश्च वस्त्रम् ।
युवं ब्रह्मणेऽनुमन्यमानौ बृहस्पते साकमिन्द्रश्च दत्तम् ४२
स्योनाद्योनेरधि बुध्यमानौ हसामुदौ महसा मोदमानौ
सुगू सुपुत्रौ सुगृहौ तराथो जीवावुषसो विभातीः ४३
नवं वसानः सुरभिः सुवासा उदागां जीव उषसो विभातीः ।
आण्डात् पतत्रीवामुक्षि विश्वस्मादेनसस्परि ४४
शुम्भनी द्यावापृथिवी अन्तिसुम्ने महिव्रते ।
आपः सप्त सुस्रुवुर्देवीस्ता नो मुञ्चन्त्वंहसः ४५
सूर्यायै देवेभ्यो मित्राय वरुणाय च ।
ये भूतस्य प्रचेतसस्तेभ्य इदमकरं नमः ४६
य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः ।
संधाता संधिं मघवा पुरूवसुर्निष्कर्ता विहृतं पुनः ४७
अपास्मत् तम उच्छतु नीलं पिशङ्गमुत लोहितं यत् ।
निर्दहनी या पृषातक्य१स्मिन् तां स्थाणावध्या सजामि ४८ (१११)

यावतीः कृत्या उपवासने यावन्तो राज्ञो वरुणस्य पाशाः ।
व्यृद्धयो या असमृद्धयो या अस्मिन् ता स्थाणावधि सादयामि ४९
या मे प्रियतमा तनूः सा मे बिभाय वाससः ।
तस्याग्रे त्वं वनस्पते नीविं कृणुष्व मा वयं रिषाम ५०(११)
ये अन्ता यावतीः सिचो य ओतवो ये च तन्तवः ।
वासो यत् पत्नीभिरुतं तन्नः स्योनमुप स्पृशात् ५१
उशतीः कन्यला इमाः पितृलोकात् पतिं यतीः ।
अव दीक्षामसृक्षत स्वाहा ५२
बृहस्पतिनावसृष्टां विश्वे देवा अधारयन् । वर्चो गोषु प्रविष्टं यत् तेनेमां सं सृजामसि ५३
बृहस्पतिनावसृष्टां विश्वे देवा अधारयन् । तेजो गोषु प्रविष्टं यत् तेनेमां सं सृजामसि ५४
बृहस्पतिनावसृष्टां विश्वे देवा अधारयन् । भगो गोषु प्रविष्टो यस्तेनेमां सं सृजामसि ५५
बृहस्पतिनावसृष्टां विश्वे देवा अधारयन् । यशो गोषु प्रविष्टं यत् तेनेमां सं सृजामसि ५६
बृहस्पतिनावसृष्टां विश्वे देवा अधारयन् । पयो गोषु प्रविष्टं यत् तेनेमां सं सृजामसि ५७
बृहस्पतिनावसृष्टां विश्वे देवा अधारयन् । रसो गोषु प्रविष्टो यस्तेनेमां सं सृजामसि ५८
यदीमे केशिनो जना गृहे ते समनर्तिषू रोदेन कृण्वन्तोऽघम् ।
अग्निष्ट्वा तस्मादेनसः सविता च प्र मुञ्चताम् ५९
यदीयं दुहिता तव विकेश्यरुदद् गृहे रोदेन कृण्वत्यघम् ।
अग्निष्ट्वा तस्मादेनसः सविता च प्र मुञ्चताम् ६० (१२)
यज्जामयो यद् युवतयो गृहे ते समनर्तिषू रोदेन कृण्वतीरघम् ।
अग्निष्ट्वा तस्मादेनसः सविता च प्र मुञ्चताम् ६१
यत् ते प्रजायां पशुषु यद् वा गृहेषु निष्ठितमघकृद्भिरघं कृतम् ।
अग्निष्ट्वा तस्मादेनसः सविता च प्र मुञ्चताम् ६२
इयं नार्युप ब्रूते पूल्यान्यावपन्तिका । दीर्घायुरस्तु मे पतिर्जीवाति शरदः शतम् ६३
इहेमाविन्द्र सं नुद चक्रवाकेव दंपती । प्रजयैनौ स्वस्तकौ विश्वमायुर्व्यश्नुताम् ६४
यदासन्द्यामुपधाने यद् वोपवासने कृतम् । विवाहे कृत्यां यां चक्रुरास्नाने तां नि दध्मसि ६५
यद् दुष्कृतं यच्छमलं विवाहे वहतौ च यत् । तत् संभलस्य कम्बले मृज्महे दुरितं वयम् ६६
संभले मलं सादयित्वा कम्बले दुरितं वयम्। अभूम यज्ञियाः शुद्धाः प्र ण आयूंषि तारिषत् ६७

कृत्रिमः कण्टकः शतदन् य एषः।
अपास्याः केश्यं मलमप शीर्षण्यं लिखात् ६८
अङ्गादङ्गाद् वयमस्या अप यक्ष्मं नि दध्मसि।
तन्मा प्रापत् पृथिवीं मोत देवान् दिवं मा प्रापदुर्वन्तरिक्षम्।
अपो मा प्रापन्मलमेतदग्ने यमं मा प्रापत् पितॄंश्च सर्वान् ६९
सं त्वा नह्यामि पयसा पृथिव्याः सं त्वा नह्यामि पयसौषधीनाम्।
सं त्वा नह्यामि प्रजया धनेन सा संनद्धा सनुहि वाजमेमम् ७० (१३)
अमोऽहमस्मि सा त्वं सामाहमस्म्यृक् त्वं द्यौरहं पृथिवी त्वम्।
ताविह सं भवाव प्रजामा जनयावहै ७१
जनियन्ति नावग्रवः पुत्रियन्ति सुदानवः।
अरिष्टासू सचेवहि बृहते वाजसातये ७२
ये पितरो वधूदर्शा इमं वहतुमागमन्।
ते अस्यै वध्वै संपत्न्यै प्रजावच्छर्म यच्छन्तु ७३
येदं पूर्वागन् रशनायमाना प्रजामस्यै द्रविणं चेह दत्त्वा।
तां वहन्त्वगतस्यानु पन्थां विराडियं सुप्रजा अत्यजैषीत् ७४
प्र बुध्यस्व सुबुधा बुध्यमाना दीर्घायुत्वाय शतशारदाय।
गृहान् गच्छ गृहपत्नी यथासो दीर्घं त आयुः सविता कृणोतु ७५ (१४) (१३९)

[इत्येकोनत्रिंशः प्रपाठकः ॥२९॥]

॥ इति द्वितीयोऽनुवाकः ॥२॥

॥ इति चतुर्दशं काण्डं समाप्तम् ॥

मन्त्रसंख्या—

त्रयोदशकाण्डस्यान्तपर्यन्तं— ३७९१
चतुर्दशकाण्डस्य ... ... १३९
सर्वयोगः ३९३०

# पञ्चदशं काण्डम् ।

( १ ) अध्यात्म- प्रकरणम् ।

[ अष्टादश पर्यायाः । ]

१–८ अथर्वा । अध्यात्मं, व्रात्यः । १ साम्नी पङ्क्तिः; २ द्विपदा साम्नी बृहती; ३ एकपदा यजुर्ब्राह्म्यनुष्टुप्; ४ एकपदा विराड् गायत्री; ५ साम्नी अनुष्टुप्; ६ त्रिपदा प्राजापत्या बृहती; ७ आसुरी पङ्क्तिः; ८ त्रिपदा अनुष्टुप् ।

[ अथ त्रिंशः प्रपाठकः ॥३०॥ ]

[१](१) व्रात्य आसीदीयमान एव स प्रजापतिं समैरयत् १
स प्रजापतिः सुवर्णमात्मन्नपश्यत् तत् प्राजनयत् २
तदेकमभवत् तल्ललाममभवत् तन्महदभवत् तज्ज्येष्ठमभवत् तद् ब्रह्माभवत्
तत् तपोऽभवत् तत् सत्यमभवत् तेन प्राजायत ३
सोऽवर्धत स महानभवत् स महादेवोऽभवत् ४
स देवानामीशां पर्यैत् स ईशानोऽभवत् ५
स एकव्रात्योऽभवत् स धनुरादत्त तदेवेन्द्रधनुः ६
नीलमस्योदरं लोहितं पृष्ठम् ७
नीलेनैवाप्रियं भ्रातृव्यं प्रोर्णोति लोहितेन
द्विषन्तं विध्यतीति ब्रह्मवादिनो वदन्ति ८ (८)

[ २ ] १–३१ अथर्वा । अध्यात्मं, व्रात्यः । १, ६, ९, १७, २५, ३० साम्न्यनुष्टुप्; २, १८, २६ साम्नी त्रिष्टुप् ।३ द्विपदाऽऽर्षी पङ्क्तिः; ४,२०,२८ द्विपदा ब्राह्मी गायत्री; ५,१३,२१,२९ द्विपदाऽऽर्ची गायत्री; १४ साम्नी पङ्क्तिः; १२ आसुरी गायत्री; ७, १५, २३, ३१ पदपङ्क्तिः; ८, १६, २४,३२ त्रिपदा प्राजापत्या त्रिष्टुप्; १० एकपदा उष्णिक्; ११ द्विपदाऽऽर्षी भुरिक् त्रिष्टुप्; १२ आर्षी पराऽनुष्टुप्; १९ द्विपदा विराडार्षी पङ्क्तिः; २७ निचृदार्षी पङ्क्तिः ।

(२) स उदतिष्ठत् स प्राचीं दिशमनु व्यचलत् ॥१॥ १
तं बृहच्च रथन्तरं चादित्याश्च विश्वे च देवा अनुव्यचलन् ॥२॥ २
बृहते च वै स रथन्तराय चादित्येभ्यश्च विश्वेभ्यश्च देवेभ्य आ वृश्चते
य एवं विद्वांसं व्रात्यमुपवदति ॥३॥ ३
बृहतश्च वै स रथन्तरस्य चादित्यानां च विश्वेषां च देवानां
प्रियं धाम भवति तस्य प्राच्यां दिशि ॥४॥ ४ (१२)

श्रद्धा पुंश्चली मित्रो मागधो विज्ञानं वासोऽहरुष्णीषं
रात्री केशा हरितौ प्रवर्तौ कल्मलिर्मणिः ॥५॥ ५
भूतं च भविष्यच्च परिष्कन्दौ मनो विपथम् ॥६॥ ६
मातरिश्वा च पवमानश्च विपथवाहौ वातः सारथी रेष्मा प्रतोदः ॥७॥ ७
कीर्तिश्च यशश्च पुरःसरावैनं कीर्तिर्गच्छत्या यशो गच्छति य एवं वेद ॥८॥ ८
स उदतिष्ठत् स दक्षिणां दिशमनु व्यचलत् ॥१॥ ९
तं यज्ञायज्ञियं च वामदेव्यं च यज्ञश्च यजमानश्च पशवश्चानुव्यचलन्॥२॥१०
यज्ञायज्ञियाय च वै स वामदेव्याय च यज्ञाय च यजमानाय च पशुभ्यश्चा वृश्चते
य एवं विद्वांसं व्रात्यमुपवदति ॥३॥ ११
यज्ञायज्ञियस्य च वै स वामदेव्यस्य च यज्ञस्य च यजमानस्य च पशूनां च
प्रियं धाम भवति तस्य दक्षिणायां दिशि ॥४॥ १२
उषाः पुंश्चली मन्त्रो मागधो विज्ञानं वासोऽहरुष्णीषं
रात्री केशा हरितौ प्रवर्तौ कल्मलिर्मणिः ॥५॥ १३
अमावास्या च पौर्णमासी च परिष्कन्दौ मनो विपथम् ॥६॥ १४
मातरिश्वा च पवमानश्च विपथवाहौ वातः सारथी रेष्मा प्रतोदः ॥७॥ १५
कीर्तिश्च यशश्च पुरःसरावैनं कीर्तिर्गच्छत्या यशो गच्छति य एवं वेद ॥८॥ १६
स उदतिष्ठत् स प्रतीचीं दिशमनु व्यचलत् ॥१॥ १७
तं वैरूपं च वैराजं चापश्च वरुणश्च राजानुव्यचलन्॥२॥ १८
वैरूपाय च वै स वैराजाय चाद्भ्यश्च वरुणाय च राज्ञ आ वृश्चते
य एवं विद्वांसं व्रात्यमुपवदति ॥३॥ १९
वैरूपस्य च वै स वैराजस्य चापां च वरुणस्य च राज्ञः
प्रियं धाम भवति तस्य प्रतीच्यां दिशि ॥४॥ २०
इरा पुंश्चली हसो मागधो विज्ञानं वासोऽहरुष्णीषं
रात्री केशा हरितौ प्रवर्तौ कल्मलिर्मणिः ॥५॥ २१
अहश्च रात्री च परिष्कन्दौ मनो विपथम् ॥६॥ २२
मातरिश्वा च पवमानश्च विपथवाहौ वातः सारथी रेष्मा प्रतोदः ॥७॥ २३
कीर्तिश्च यशश्च पुरःसरावैनं कीर्तिर्गच्छत्या यशो गच्छति य एवं वेद॥८॥ २४
स उदतिष्ठत् स उदीचीं दिशमनु व्यचलत् ॥१॥ २५
तं श्यैतं च नौधसं च सप्तर्षयश्च सोमश्च राजानुव्यचलन्॥२॥ २६ (३४)

श्यैताय च वै स नौधसाय च सप्तर्षिभ्यश्च सोमाय च राज्ञ आ वृश्चते
य एवं विद्वांसं व्रात्यमुपवदति ॥३॥ २७
श्यैतस्य च वै स नौधसस्य च सप्तर्षीणां च सोमस्य च राज्ञः
प्रियं धाम भवति तस्योदीच्यां दिशि ॥४॥ २८
विद्युत् पुंश्चली स्तनयित्नुर्मागधो विज्ञानं वासोऽहरुष्णीषं
रात्री केशा हरितौ प्रवर्तौ कल्मलिर्मणिः ॥५॥ २९
श्रुतं च विश्रुतं च परिष्कन्दौ मनो विपथम् ॥६॥ ३०
मातरिश्वा च पवमानश्च विपथवाहौ वातः सारथी रेष्मा प्रतोदः ॥७॥ ३१
कीर्तिश्च यशश्च पुरःसरावैनं कीर्तिर्गच्छत्या यशो गच्छति य एवं वेद ॥८॥ ३२ (४०)

[ ३ ] १-११ अथर्वा । अध्यात्मं, व्रात्यः । १ पिपीलिकमध्या गायत्री; २ साम्नी उष्णिक्; ३ याजुषी जगती; ४ द्विपदाऽऽर्च्युष्णिक्; ५ आर्ची बृहती; ६ आसुर्यनुष्टुप्; ७ साम्नी गायत्री; ८ आसुरी पङ्क्तिः; ९ आसुरी जगती; १० प्राजापत्या त्रिष्टुप्; ११ विराड् गायत्री ।

(३) स संवत्सरमूर्ध्वोऽतिष्ठत् तं देवा अब्रुवन् व्रात्य किं नु तिष्ठसीति १
सोऽब्रवीदासन्दीं मे सं भरन्त्विति ॥२॥ तस्मै व्रात्यायासन्दीं समभरन् २
तस्या ग्रीष्मश्च वसन्तश्च द्वौ पादावास्तां शरच्च वर्षाश्च द्वौ ४
बृहच्च रथंतरं चानूच्ये३ आस्तां यज्ञायज्ञियं च वामदेव्यं च तिरश्च्ये५ ५
ऋचः प्राञ्चस्तन्तवो यजूंषि तिर्यञ्चः ॥६॥ वेद आस्तरणं ब्रह्मोपबर्हणम् ७
सामासाद उद्गीथोऽपश्रयः ॥८॥ तामासन्दीं व्रात्य आरोहत् . ९
तस्य देवजनाः परिष्कन्दा आसन्त्संकल्पाः प्रहाय्या३ विश्वानि भूतान्युपसदः १०
विश्वान्येवास्य भूतान्युपसदो भवन्ति य एवं वेद ११ (५१)

[ ४ ] १-१८ अथर्वा । अध्यात्मं, व्रात्यः । १, १३, १६ दैवी जगती; ४, ७, १० प्राजापत्या गायत्री; २,८ आर्ची अनुष्टुप्; ३,१२ द्विपदा प्राजापत्या जगती; ५ प्राजापत्या पङ्क्तिः; ६ आर्ची गायत्री; ९ भौमार्ची त्रिष्टुप्; ११ साम्नी त्रिष्टुप्; १४ प्राजापत्या बृहती; १५, १८ द्विपदाऽऽर्ची पङ्क्तिः; १७ आर्ची उष्णिक् ।

(४) तस्मै प्राच्या दिशः ॥१॥ १
वासन्तौ मासौ गोप्तारावकुर्वन् बृहच्च रथंतरं चानुष्ठातारौ ॥२॥ २
वासन्तावेनं मासौ प्राच्या दिशो गोपायतो बृहच्च रथंतरं चानु तिष्ठतो
य एवं वेद ॥३॥ ३
तस्मै दक्षिणाया दिशः ॥१॥ ४
ग्रैष्मौ मासौ गोप्तारावकुर्वन् यज्ञायज्ञियं च वामदेव्यं चानुष्ठातारौ ॥२॥ ५ (५६)

ग्रैष्माविनं मासौ दक्षिणाया दिशो गोपायतो यज्ञायज्ञियं च वामदेव्यं चानु तिष्ठतो
य एवं वेद ॥३॥ ६

तस्मै प्रतीच्या दिशः ॥१॥ ७

वार्षिकौ मासौ गोप्तारावकुर्वन् वैरूपं च वैराजं चानुष्ठातारौ ॥२॥ ८

वार्षिकावेनं मासौ प्रतीच्या दिशो गोपायतो वैरूपं च वैराजं चानु तिष्ठतो
य एवं वेद ॥३॥ ९

तस्मा उदीच्या दिशः ॥१॥ १०

शारदौ मासौ गोप्तारावकुर्वञ्छ्यैतं च नौधसं चानुष्ठातारौ ॥२॥ ११

शारदावेनं मासावुदीच्या दिशो गोपायतः श्यैतं च नौधसं चानु तिष्ठतो
य एवं वेद ॥३॥ १२

तस्मै ध्रुवायां दिशः ॥१॥ १३

हैमनौ मासौ गोप्तारावकुर्वन् भूमिं चाग्निं चानुष्ठातारौ ॥२॥ १४

हैमनावेनं मासौ ध्रुवाया दिशो गोपायतो भूमिश्चाग्निश्चानु तिष्ठतो
य एवं वेद ॥३॥ १५

तस्मा ऊर्ध्वाया दिशः ॥१॥ १६

शैशिरौ मासौ गोप्तारावकुर्वन् दिवं चादित्यं चानुष्ठातारौ ॥२॥ १७

शैशिरावेनं मासावूर्ध्वाया दिशो गोपायतो द्यौश्चादित्यश्चानु तिष्ठतो
य एवं वेद ॥३॥ १८ (६९)

[५] १-२१ अथर्वा। रुद्रः। १ त्रिपदा समविषमा गायत्री; २ त्रिपदा भुरिगार्ची त्रिष्टुप्; ३,६,९,१२,१५,१८,२१ द्विपदा प्राजापत्याऽनुष्टुप्; ४ त्रिपदा स्वराट् प्राजापत्या पङ्क्तिः; ५,८,११,१७ त्रिपदा ब्राह्मी गायत्री; ७,१०,१६ त्रिपदा ककुप्; १३, १९ भुरिग् विषमा गायत्री; १४ निचृद्ब्राह्मी गायत्री, २० विराट्।

(५) तस्मै प्राच्या दिशो अन्तर्देशाद् भवमिष्वासमनुष्ठातारमकुर्वन् ॥१॥ १

भव एनमिष्वासः प्राच्या दिशो अन्तर्देशादनुष्ठातानु तिष्ठति
नैनं शर्वो न भवो नेशानः ॥२॥ २

नास्य पशून् न समानान् हिनस्ति य एवं वेद ॥३॥ ३

तस्मै दक्षिणाया दिशो अन्तर्देशाच्छर्वमिष्वासमनुष्ठातारमकुर्वन् ॥१॥ ४

शर्व एनमिष्वासो दक्षिणाया दिशो अन्तर्देशादनुष्ठातानु तिष्ठति
नैनं शर्वो न भवो नेशानः ॥२॥ ५

नास्य पशून् न समानान् हिनस्ति य एवं वेद ॥३॥ ६ (७५)

तस्मै प्रतीच्या दिशो अन्तर्देशात् पशुपतिमिष्वासमनुष्ठातारमकुर्वन्॥१॥ ७
पशुपतिरेनमिष्वासः प्रतीच्या दिशो अन्तर्देशादनुष्ठातानु तिष्ठति
नैनं शर्वो न भवो नेशानः ॥२॥ ८
नास्य पशून् न समानान् हिनस्ति य एवं वेद ॥३॥ ९

तस्मा उदीच्या दिशो अन्तर्देशादुग्रं देवमिष्वासमनुष्ठातारमकुर्वन् ॥१॥ १०
उग्र एनं देव इष्वास उदीच्या दिशो अन्तर्देशादनुष्ठातानु तिष्ठति
नैनं शर्वो न भवो नेशानः ॥२॥ ११
नास्य पशून् न समानान् हिनस्ति य एवं वेद ॥३॥ १२

तस्मै ध्रुवाया दिशो अन्तर्देशाद् रुद्रमिष्वासमनुष्ठातारमकुर्वन्॥१॥ १३
रुद्र एनमिष्वासो ध्रुवाया दिशो अन्तर्देशादनुष्ठातानु तिष्ठति
नैनं शर्वो न भवो नेशानः ॥२॥ १४
नास्य पशून् न समानान् हिनस्ति य एवं वेद ॥३॥ १५

तस्मा ऊर्ध्वाया दिशो अन्तर्देशान्महादेवमिष्वासमनुष्ठातारमकुर्वन् ॥१॥ १६
महादेव एनमिष्वास ऊर्ध्वाया दिशो अन्तर्देशादनुष्ठातानु तिष्ठति
नैनं शर्वो न भवो नेशानः ॥२॥ १७
नास्य पशून् न समानान् हिनस्ति य एवं वेद ॥३॥ १८

तस्मै सर्वेभ्यो अन्तर्देशेभ्य ईशानमिष्वासमनुष्ठातारमकुर्वन् ॥१॥ १९
ईशान एनमिष्वासः सर्वेभ्यो अन्तर्देशेभ्योऽनुष्ठातानु तिष्ठति
नैनं शर्वो न भवो नेशानः ॥२॥ २०
नास्य पशून् न समानान् हिनस्ति य एवं वेद ॥३॥ २१ (९०)

[६] १-२७ अथर्वा । अध्यात्मं, व्रात्यः । १, ४ आसुरी पङ्क्तिः; ७, १०, १३, १६, २५ आसुरी बृहती; २२-२३ परोष्णिक्; २,१७ आर्ची पङ्क्तिः; १९ आर्च्युष्णिक्; ५,११ साम्नी त्रिष्टुप्; ८ साम्नी पङ्क्तिः; १४,२४ आर्ची त्रिष्टुप्; २० साम्न्यनुष्टुप्; २६ आर्च्यनुष्टुप्; ३ आर्षी पङ्क्तिः; ६, १२ निचृद्बृहती; ९ प्राजापत्या त्रिष्टुप्; १५,१८ विराट् जगती, २१ आर्ची बृहती; २७ विराड् बृहती ।

(६) स ध्रुवां दिशमनु व्यचलत् ॥१॥ १
तं भूमिश्चाग्निश्चौषधयश्च वनस्पतयश्च वानस्पत्याश्च वीरुधश्चानुव्यचलन् ॥२॥ २
भूमेश्च वै सोऽग्नेश्चौषधीनां च वनस्पतीनां च वानस्पत्यानां
च वीरुधां च प्रियं धाम भवति य एवं वेद ॥३॥ ३ (९३)

स ऊर्ध्वां दिशमनु व्यचलत् ॥१॥ ४
तमृतं च सत्यं च सूर्यश्च चन्द्रश्च नक्षत्राणि चानुव्यचलन् ॥२॥ ५
ऋतस्य च वै स सत्यस्य च सूर्यस्य च चन्द्रस्य च नक्षत्राणां च
प्रियं धाम भवति य एवं वेद ॥३॥ ६
स उत्तमां दिशमनु व्यचलत् ॥१॥ ७
तमृचश्च सामानि च यजूंषि च ब्रह्म चानुव्यचलन् ॥२॥ ८
ऋचां च वै स साम्नां च यजुषां च ब्रह्मणश्च प्रियं धाम भवति य एवं वेद ॥३॥ ९
स बृहतीं दिशमनु व्यचलत् ॥१॥ १०
तमितिहासश्च पुराणं च गाथाश्च नाराशंसीश्चानुव्यचलन् ॥२॥ ११
इतिहासस्य च वै स पुराणस्य च गाथानां च नाराशंसीनां च
प्रियं धाम भवति य एवं वेद ॥३॥ १२
स परमां दिशमनु व्यचलत् ॥१॥ १३
तमाहवनीयश्च गार्हपत्यश्च दक्षिणाग्निश्च यज्ञश्च यजमानश्च पशवश्चानुव्यचलन् ॥२॥ १४
आहवनीयस्य च वै स गार्हपत्यस्य च दक्षिणाग्नेश्च यज्ञस्य च यजमानस्य च पशूनां च
प्रियं धाम भवति य एवं वेद ॥३॥ १५
सोऽनादिष्टां दिशमनु व्यचलत् ॥१॥ १६
तमृतवश्चार्तवाश्च लोकाश्च लौक्याश्च मासाश्चार्धमासाश्चाहोरात्रे चानुव्यचलन् ॥२॥ १७
ऋतूनां च वै स आर्तवानां च लोकानां च लौक्यानां च मासानां चार्धमासानां चाहोरात्रयोश्च
प्रियं धाम भवति य एवं वेद ॥३॥ १८
सोऽनावृत्तां दिशमनु व्यचलत् ततो नावर्त्स्यन्नमन्यत ॥१॥ १९
तं दितिश्चादितिश्चेडा चेन्द्राणी चानुव्यचलन् ॥२॥ २०
दितेश्च वै सोऽदितेश्चेडायाश्चेन्द्राण्याश्च प्रियं धाम भवति य एवं वेद ॥३॥ २१
स दिशोऽनु व्यचलत् ॥१॥ २२
तं विराडनु व्यचलत् सर्वे च देवाः सर्वाश्च देवताः ॥२॥ २३
विराजश्च वै स सर्वेषां च देवानां सर्वासां च देवतानां प्रियं धाम भवति य एवं वेद ॥३॥ २४
स सर्वानन्तर्देशाननु व्यचलत् ॥१॥ २५
तं प्रजापतिश्च परमेष्ठी च पिता च पितामहश्चानुव्यचलन् ॥२॥ २६
प्रजापतेश्च वै स परमेष्ठिनश्च पितुश्च पितामहस्य च प्रियं धाम भवति य एवं वेद ॥३॥ २७(११७)

[७] १-५ अथर्वा। अध्यात्मं, व्रात्यः। १ त्रिपदा निचृद् गायत्री; २ एकपदा विराड् बृहती; ३ विराडुष्णिक्; ४ एकपदा गायत्री; ५ पङ्क्तिः।

(७) स मंहिमा सद्रुर्भूत्वान्तं पृथिव्या अंगच्छत् स संमुद्रोऽभवत् १
तं प्रजापतिश्च परमेष्ठी च पिता च पितामहश्चापश्च श्रद्धा च
वर्षं भूत्वानुव्यवर्तयन्त २
ऐनमापो गच्छन्त्यैनं श्रद्धा गच्छत्यैनं वर्षं गच्छति य एवं वेद ३
तं श्रद्धा च यज्ञश्च लोकश्चान्नं चान्नाद्यं च भूत्वाभिपर्यावर्तन्त ४
ऐनं श्रद्धा गच्छत्यैनं यज्ञो गच्छत्यैनं लोको गच्छत्यैनमन्नं
गच्छत्यैनमन्नाद्यं गच्छति य एवं वेद ५ (१२२)

॥ इति प्रथमोऽनुवाकः ॥१॥

[८] १-३ अथर्वा। अध्यात्मं, व्रात्यः। १ साम्नी उष्णिक्, २ प्राजापत्याऽनुष्टुप्; ३ आर्ची पङ्क्तिः।

[२] (८) सोऽरज्यत ततो राजन्योऽजायत १
स विशः सबन्धूनन्नमन्नाद्यमभ्युदतिष्ठत् २
विशां च वै स सबन्धूनां चान्नस्य चान्नाद्यस्य च प्रियं धाम भवति य एवं वेद ३ (१२५)

[९] १-३ अथर्वा। अध्यात्मं, व्रात्यः। १ आसुरी जगती; २ आर्ची गायत्री; ३ आर्ची पङ्क्तिः।

(९) स विशोऽनु व्यचलत् १
तं सभा च समितिश्च सेना च सुरा चानुव्यचलन् २
सभायाश्च वै स समितेश्च सेनायाश्च सुरायाश्च प्रियं धाम भवति य एवं वेद ३ (१२८)

[१०] १-११ अथर्वा। अध्यात्मं, व्रात्यः। १ द्विपदा साम्नी बृहती; २ त्रिपदाऽऽर्ची पङ्क्तिः, ३ द्विपदा प्राजापत्या पङ्क्तिः; ४ त्रिपदा वर्धमाना गायत्री; ५ त्रिपदा साम्नी बृहती; ६, ८, १० द्विपदा आसुरी गायत्री; ७, ९ साम्नी उष्णिक्, ११ आसुरी बृहती।

(१०) तद् यस्यैवं विद्वान् व्रात्यो राज्ञोऽतिथिर्गृहानागच्छेत् १
श्रेयांसमेनमात्मनो मानयेत् तथा क्षत्राय ना वृश्चते तथा राष्ट्राय ना वृश्चते २
अतो वै ब्रह्म च क्षत्रं चोदतिष्ठतां ते अब्रूतां कं प्र विशावेति ३
अतो वै बृहस्पतिमेव ब्रह्म प्र विशत्विन्द्रं क्षत्रं तथा वा इति ४
अतो वै बृहस्पतिमेव ब्रह्म प्राविशदिन्द्रं क्षत्रम् ५
इयं वा उ पृथिवी बृहस्पतिर्द्यौरेवेन्द्रः ६ (१३४)

अयं वा उ अग्निर्ब्रह्मासावादित्यः क्षत्रम् ७
ऐनं ब्रह्म गच्छति ब्रह्मवर्चसी भवति ८
यः पृथिवीं बृहस्पतिमग्निं ब्रह्म वेद ९
ऐनमिन्द्रियं गच्छतीन्द्रियवान् भवति १०
य आदित्यं क्षत्रं दिवमिन्द्रं वेद ११ (१३९)

[११] १-११ अथर्वा। अध्यात्मं, व्रात्यः। १ दैवी पङ्क्तिः; २ द्विपदा पूर्वात्रिष्टुबतिशाक्वरी; ३-६, ८, १० निचृदाऽऽर्ची बृहती (१० भुरिक्); ७, ९ द्विपदा प्राजापत्या बृहती; ११ द्विपदाऽऽर्च्यनुष्टुप्।

(११) तद् यस्यैवं विद्वान् व्रात्योऽतिथिर्गृहानागच्छेत् १
स्वयमेनमभ्युदेत्य ब्रूयाद् व्रात्य क्वाऽवात्सीर्व्रात्योदकं व्रात्य तर्पयन्तु व्रात्य यथा ते प्रियं तथास्तु व्रात्य यथा ते वशस्तथास्तु व्रात्य यथा ते निकामस्तथास्त्विति २
यदेनमाह व्रात्य क्वाऽवात्सीरिति पथ एव तेन देवयानानव रुन्द्धे ३
यदेनमाह व्रात्योदकमित्यप एव तेनाव रुन्द्धे ४
यदेनमाह व्रात्य तर्पयन्त्विति प्राणमेव तेन वर्षीयांसं कुरुते ५
यदेनमाह व्रात्य यथा ते प्रियं तथास्त्विति प्रियमेव तेनाव रुन्द्धे ६
ऐनं प्रियं गच्छति प्रियः प्रियस्य भवति य एवं वेद ७
यदेनमाह व्रात्य यथा ते वशस्तथास्त्विति वशमेव तेनाव रुन्द्धे ८
ऐनं वशो गच्छति वशी वशिनां भवति य एवं वेद ९
यदेनमाह व्रात्य यथा ते निकामस्तथास्त्विति निकाममेव तेनाव रुन्द्धे १०
ऐनं निकामो गच्छति निकामे निकामस्य भवति य एवं वेद ११ (१५०)

[१२] १-११ अथर्वा। अध्यात्मं, व्रात्यः। १ त्रिपदा गायत्री; २ प्राजापत्या बृहती; ३-४ भुरिक्प्राजापत्याऽनुष्टुप् (४ साम्नी); ५-६, ९-१० आसुरी गायत्री; ८ विराड् गायत्री; ७, ११ त्रिपदा प्राजापत्या त्रिष्टुप्।

(१२) तद् यस्यैवं विद्वान् व्रात्य उद्धृतेष्वग्निष्वधिश्रितेऽग्निहोत्रेऽतिथिर्गृहानागच्छेत् १
स्वयमेनमभ्युदेत्य ब्रूयाद् व्रात्यातिं सृज होष्यामीति २
स चातिसृजेज्जुहुयान्न चातिसृजेन्न जुहुयात् ३
स य एवं विदुषा व्रात्येनातिसृष्टो जुहोति ४
प्र पितृयाणं पन्थां जानाति प्र देवयानम् ५ (१५५)

न देवेष्वा वृश्चते हुतमस्य भवति　　६

पर्यस्यास्मिँल्लोक आयतनं शिष्यते य एवं विदुषा
　　व्रात्येनातिसृष्टो जुहोति　　७

अथ य एवं विदुषा व्रात्येनानतिसृष्टो जुहोति　　८

न पितृयाणं पन्थां जानाति न देवयानम्　　९

आ देवेषु वृश्चते अहुतमस्य भवति　　१०

नास्यास्मिँल्लोक आयतनं शिष्यते य एवं विदुषा
　　व्रात्येनानतिसृष्टो जुहोति　　११　　(१६१)

[ १३ ] १-१४ अथर्वा । अध्यात्मं, व्रात्यः । १ साम्नी उष्णिक्; २, ६ प्राजापत्याऽनुष्टुप्; ३, ५, ७ आसुरी गायत्री; ४, ८ साम्नी बृहती; ९ द्विपदा निचृद्गायत्री; १० द्विपदा विराड् गायत्री; ११ प्राजापत्या पङ्क्तिः; १२ आसुरी जगती; १३ सतः पङ्क्तिः, १४ अक्षरपङ्क्तिः ।

तद् यस्यैवं विद्वान् व्रात्य एकां रात्रिमतिथिर्गृहे वसति　　१

ये पृथिव्यां पुण्या लोकास्तानेव तेनाव रुन्द्धे　　२

तद् यस्यैवं विद्वान् व्रात्यो द्वितीयां रात्रिमतिथिर्गृहे वसति　　३

येऽन्तरिक्षे पुण्या लोकास्तानेव तेनाव रुन्द्धे　　४

तद् यस्यैवं विद्वान् व्रात्यस्तृतीयां रात्रिमतिथिर्गृहे वसति　　५

ये दिवि पुण्या लोकास्तानेव तेनाव रुन्द्धे　　६

तद् यस्यैवं विद्वान् व्रात्यश्चतुर्थीं रात्रिमतिथिर्गृहे वसति　　७

ये पुण्यानां पुण्या लोकास्तानेव तेनाव रुन्द्धे　　८

तद् यस्यैवं विद्वान् व्रात्योऽपरिमिता रात्रीरतिथिर्गृहे वसति　　९

य एवापरिमिताः पुण्या लोकास्तानेव तेनाव रुन्द्धे　　१०

अथ यस्याव्रात्यो व्रात्यब्रुवो नामबिभ्रत्यतिथिर्गृहानागच्छेत्　　११

कर्षेदेनं न चैनं कर्षेत्　　१२

अस्यै देवताया उदकं याचामीमां देवतां वासय इमामिमां देवतां
　　परि वेवेष्मीत्येनं परि वेविष्यात्　　१३

तस्यामेवास्य तद् देवतायां हुतं भवति य एवं वेद　　१४　　(१७५)

[ १४ ] १-२४ अथर्वा । अध्यात्मं, व्रात्यः । १ त्रिपदा अनुष्टुप्; २, ४, ६, ८, १०, १२, १४, १६, १८, २०, २२, २४ द्विपदा आसुरी गायत्री ( १२, १४, १६, १८, भुरिक् प्राजापत्या अनुष्टुप् ); ३,९ पुर उष्णिक्; ५ अनुष्टुप्; ७ प्रस्तारपङ्क्तिः; ११ स्वराड् गायत्री; १३, १५ आर्ची पङ्क्तिः; १९ भुरिङ्नागी गायत्री; २१ प्राजापत्या त्रिष्टुप् ।

(१४) स यत् प्राचीं दिशमनु व्यचलन्मारुतं शर्धो भूत्वानुव्यचलन्मनोऽन्नादं कृत्वा १
मनसान्नादेनान्नमत्ति य एवं वेद २
स यद् दक्षिणां दिशमनु व्यचलदिन्द्रो भूत्वानुव्यचलद् बलमन्नादं कृत्वा ३
बलेनान्नादेनान्नमत्ति य एवं वेद ४
स यत् प्रतीचीं दिशमनु व्यचलद् वरुणो राजा भूत्वानुव्यचलदपोऽन्नादीः कृत्वा ५
अद्भिरन्नादिभिरन्नमत्ति य एवं वेद ६
स यदुदीचीं दिशमनु व्यचलत् सोमो राजा भूत्वानुव्यचलत्
सप्तर्षिभिर्हुत आहुतिमन्नादीं कृत्वा ७
आहुत्यान्नाद्यान्नमत्ति य एवं वेद ८
स यद् ध्रुवां दिशमनु व्यचलद् विष्णुर्भूत्वानुव्यचलद् विराजमन्नादीं कृत्वा ९
विराजान्नाद्यान्नमत्ति य एवं वेद १०
स यत् पशूननु व्यचलद् रुद्रो भूत्वानुव्यचलदोषधीरन्नादीः कृत्वा ११
ओषधीभिरन्नादीभिरन्नमत्ति य एवं वेद १२
स यत् पितॄननु व्यचलद् यमो राजा भूत्वानुव्यचलत् स्वधाकारमन्नादं कृत्वा १३
स्वधाकारेणान्नादेनान्नमत्ति य एवं वेद १४
स यन्मनुष्या३ननु व्यचलदग्निर्भूत्वानुव्यचलत् स्वाहाकारमन्नादं कृत्वा १५
स्वाहाकारेणान्नादेनान्नमत्ति य एवं वेद १६
स यदूर्ध्वां दिशमनु व्यचलद् बृहस्पतिर्भूत्वानुव्यचलद् वषट्कारमन्नादं कृत्वा १७
वषट्कारेणान्नादेनान्नमत्ति य एवं वेद १८
स यद् देवाननु व्यचलदीशानो भूत्वानुव्यचलन्मन्युमन्नादं कृत्वा १९
मन्युनान्नादेनान्नमत्ति य एवं वेद २०
स यत् प्रजा अनु व्यचलत् प्रजापतिर्भूत्वानुव्यचलत् प्राणमन्नादं कृत्वा २१
प्राणेनान्नादेनान्नमत्ति य एवं वेद २२
स यत् सर्वानन्तर्देशाननु व्यचलत् परमेष्ठी भूत्वानुव्यचलद् ब्रह्मान्नादं कृत्वा २३
ब्रह्मणान्नादेनान्नमत्ति य एवं वेद २४ (११९)

[ १५ ] १-९ अथर्वा । अध्यात्मं, व्रात्यः । १ दैवी पङ्क्तिः; २ आसुरी बृहती; ३-४, ७-८ प्राजापत्याऽनुष्टुप् ( ४, ७-८ भुरिक् ); ५-६ द्विपदा साम्नी बृहती; ९ विराड् गायत्री ।

(१५) तस्य व्रात्यस्य १
सप्त प्राणाः सप्तापानाः सप्त व्यानाः २
तस्य व्रात्यस्य । योऽस्य प्रथमः प्राण ऊर्ध्वो नामायं सो अग्निः ३
तस्य व्रात्यस्य । योऽस्य द्वितीयः प्राणः प्रौढो नामासौ स आदित्यः ४
तस्य व्रात्यस्य । योऽस्य तृतीयः प्राणोऽभ्यूढो नामासौ स चन्द्रमाः ५
तस्य व्रात्यस्य । योऽस्य चतुर्थः प्राणो विभूर्नामायं स पवमानः ६
तस्य व्रात्यस्य । योऽस्य पञ्चमः प्राणो योनिर्नाम ता इमा आपः ७
तस्य व्रात्यस्य । योऽस्य षष्ठः प्राणः प्रियो नाम त इमे पशवः ८
तस्य व्रात्यस्य । योऽस्य सप्तमः प्राणोऽपरिमितो नाम ता इमाः प्रजाः ९ (२०८)

[ १६ ] १-७ अथर्वा । अध्यात्मं, व्रात्यः । १, ३ साम्नी उष्णिक्; २, ४-५ प्राजापत्या उष्णिक्; ६ याजुषी त्रिष्टुप्; ७ आसुरी गायत्री ।

(१६) तस्य व्रात्यस्य । योऽस्य प्रथमोऽपानः सा पौर्णमासी १
तस्य व्रात्यस्य । योऽस्य द्वितीयोऽपानः साष्टका २
तस्य व्रात्यस्य । योऽस्य तृतीयोऽपानः सामावास्या ३
तस्य व्रात्यस्य । योऽस्य चतुर्थोऽपानः सा श्रद्धा ४
तस्य व्रात्यस्य । योऽस्य पञ्चमोऽपानः सा दीक्षा ५
तस्य व्रात्यस्य । योऽस्य षष्ठोऽपानः स यज्ञः ६
तस्य व्रात्यस्य । योऽस्य सप्तमोऽपानस्ता इमा दक्षिणाः ७ (२१५)

[ १७ ] १-१० अथर्वा । अध्यात्मं, व्रात्यः । १, ५ प्राजापत्या उष्णिक्; २, ७ आसुरी अनुष्टुप्; ३ याजुषी पङ्क्तिः; ४ साम्नी उष्णिक्; ६ याजुषी त्रिष्टुप्; ८ त्रिपदा प्रतिष्ठाऽऽर्ची पङ्क्तिः; ९ द्विपदा साम्नी त्रिष्टुप्; १० साम्नी अनुष्टुप् ।

(१७) तस्य व्रात्यस्य । योऽस्य प्रथमो व्यानः सेयं भूमिः १
तस्य व्रात्यस्य । योऽस्य द्वितीयो व्यानस्तदन्तरिक्षम् २
तस्य व्रात्यस्य । योऽस्य तृतीयो व्यानः सा द्यौः ३
तस्य व्रात्यस्य । योऽस्य चतुर्थो व्यानस्तानि नक्षत्राणि ४
तस्य व्रात्यस्य । योऽस्य पञ्चमो व्यानस्त ऋतवः ५ (२२०)

तस्य॒ व्रात्य॑स्य । यो॑ऽस्य ष॒ष्ठो व्या॒नस्त आ॑र्त॒वाः ६
तस्य॒ व्रात्य॑स्य । यो॑ऽस्य सप्त॒मो व्या॒नः स सं॑वत्स॒रः ७
तस्य॒ व्रात्य॑स्य । स॒मा॒नमर्थं॒ परि॑ यन्ति दे॒वाः सं॑वत्स॒रं वा
ए॒तदृ॒तवो॑ऽनु॒परि॑यन्ति॒ व्रात्यं॑ च ८
तस्य॒ व्रात्य॑स्य । यदा॑दि॒त्यम॑भिसं॒विश॒न्त्य॑मावा॒स्यां॑ चै॒व तत् पौर्ण॑मा॒सीं च॑ ९
तस्य॒ व्रात्य॑स्य । एकं॒ तदे॑षाममृत॒त्वमित्याहु॑ति॒रे॒व १० (२२५)

[ १८ ] १-५ अथर्वा । अध्यात्मं, व्रात्यः । १ दैवी पङ्क्तिः; २-३ आर्ची बृहती; ४ आर्ची अनुष्टुप्, ५ साम्नी उष्णिक् ।

(१८) तस्य॒ व्रात्य॑स्य १
यद॑स्य॒ दक्षि॑णम॒क्ष्य॑सौ स आ॑दि॒त्यो यद॑स्य स॒व्यम॒क्ष्य॑सौ स च॒न्द्रमाः॑ २
यो॑ऽस्य॒ दक्षि॑णः॒ कर्णो॑ऽयं सो अ॒ग्निर्यो॑ऽस्य स॒व्यः कर्णो॑ऽयं स पव॑मानः ३
अ॒हो॒रा॒त्रे नासि॑के॒ दिति॒श्चादि॑तिश्च शीर्षकपा॒ले सं॑वत्स॒रः शिरः॑ ४
अह्ना॑ प्र॒त्यङ् व्रात्यो॒ रात्र्या॒ प्राङ् नमो॒ व्रात्या॑य ५ (२३०)

[ इति त्रिंशः प्रपाठकः ॥३०॥] ॥ इति द्वितीयोऽनुवाकः ॥२॥

॥ इति पञ्चदशं काण्डं समाप्तम् ॥

मन्त्रसंख्या—

| | |
|---|---|
| चतुर्दशकाण्डस्यान्तपर्यन्तं— | ३९३० |
| पञ्चदशकाण्डस्य ... ... | २३० |
| सर्वयोगः | ४१६० |

# षोडशं काण्डम्।

## (१) दुःखमोचनम्।

[ १ ] १-१३ अथर्वा । प्रजापतिः (नव पर्यायाः) । १, ३ द्विपदा साम्नी बृहती; २, १० याजुषी त्रिष्टुप्; ४ आसुरी गायत्री; ५, ८ साम्नी पङ्क्तिः ( ५ द्विपदा ); ६ साम्नी अनुष्टुप्, ७ निचृद् विराड् गायत्री; ९ आसुरी पङ्क्तिः; ११ साम्नी उष्णिक्, १२-१३ आर्ची अनुष्टुप् ।

[ अथैकत्रिंशः प्रपाठकः ॥३१॥]

[१] (१) अतिसृष्टो अपां वृषभोऽतिसृष्टा अग्नयो दिव्याः १
रुजन् परिरुजन् मृणन् प्रमृणन् २
म्रोको मनोहा खनो निर्दाह आत्मदूषिस्तनूदूषिः ३
इदं तमति सृजामि तं माभ्यवनिक्षि ४
तेन तमभ्यतिसृजामो योऽस्मान् द्वेष्टि यं वयं द्विष्मः ५
अपामग्रमसि समुद्रं वोऽभ्यवसृजामि ६
योऽप्स्वग्निरति तं सृजामि म्रोकं खनिं तनूदूषिम् ७
यो व आपोऽग्निराविवेश स एष यद् वो घोरं तदेतत् ८
इन्द्रस्य व इन्द्रियेणाभि षिञ्चेत् ९
अरिप्रा आपो अप रिप्रमस्मत् १०
प्रास्मदेनो वहन्तु प्र दुष्वप्न्यं वहन्तु ११
शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोप स्पृशत त्वचं मे १२
शिवानग्नीनप्सुषदो हवामहे मयि क्षत्रं वर्च आ धत्त देवीः १३ (१३)

[ २ ] १-६ अथर्वा । वाक् । १ आसुरी अनुष्टुप्; २ आसुरी उष्णिक्; ३ साम्नी उष्णिक्; ४ त्रिपदा साम्नी बृहती; ५ आर्ची अनुष्टुप्; ६ निचृद् विराड् गायत्री ।

(२) निर्दुरर्मण्य ऊर्जा मधुमती वाक् १
मधुमती स्थ मधुमतीं वाचमुदेयम् २
उपहूतो मे गोपा उपहूतो गोपीथः ३
सुश्रुतौ कर्णौ भद्रश्रुतौ कर्णौ भद्रं श्लोकं श्रूयासम् ४
सुश्रुतिश्च मोपश्रुतिश्च मा हासिष्टां सौपर्णं चक्षुरजस्रं ज्योतिः ५
ऋषीणां प्रस्तरोऽसि नमोऽस्तु दैवाय प्रस्तराय ६ (१९)

[ ३ ] १-६ ब्रह्मा । आदित्यः । १ आसुरी गायत्री; २-३ आर्ची अनुष्टुप्; ४ प्राजापत्या त्रिष्टुप्; ५ साम्नी उष्णिक्; ६ द्विपदा साम्नी त्रिष्टप् ।

(३) मूर्धाहं रयीणां मूर्धा समानानां भूयासम् १
रुजश्च मा वेनश्च मा हासिष्टां मूर्धा च मा विधर्मा च मा हासिष्टाम् २
उर्वश्च मा चमसश्च मा हासिष्टां धर्ता च मा धरुणश्च मा हासिष्टाम् ३
विमोकश्च मार्द्रपविश्च मा हासिष्टामार्द्रदानुश्च मा मातरिश्वा च मा हासिष्टाम् ४
बृहस्पतिर्म आत्मा नृमणा नाम हृद्यः ५
असंतापं मे हृदयमुर्वी गव्यूतिः समुद्रो अस्मि विधर्मणा ६ (१५)

[ ४ ] १-७ ब्रह्मा । आदित्यः । १, ३ साम्नी अनुष्टुप्; २ साम्नी उष्णिक्; ४ त्रिपदा अनुष्टुप्; ५ आसुरी गायत्री; ६ आर्ची उष्णिक्; ७ त्रिपदा विराड्गर्भाऽनुष्टुप् ।

(४) नाभिरहं रयीणां नाभिः समानानां भूयासम् । १ । स्वासदसि सूषा अमृतो मर्त्येष्वा २
मा मां प्राणो हासीन्मो अपानोऽवहाय परा गात् ३
सूर्यो माह्नः पात्वग्निः पृथिव्या वायुरन्तरिक्षाद् यमो मनुष्येभ्यः सरस्वती पार्थिवेभ्यः ४
प्राणापानौ मा मा हासिष्टं मा जने प्र मेषि ५
स्वस्त्य१द्योषसो दोषसश्च सर्व आपः सर्वगणो अशीय ६
शक्वरी स्थ पशवो मोप स्थेषुर्मित्रावरुणौ मे प्राणापानावग्निर्मे दक्षं दधातु ७ (३१)

॥ इति प्रथमोऽनुवाकः ॥१॥

[ ५ ] १-१० यमः । दुःष्वप्ननाशनम् । १-६ (प्रथमा) विराड् गायत्री [५ (प्रथमा) भुरिक्; ६ (प्रथमा) स्वराट्]; १-६ ( द्वितीया ) प्राजापत्या गायत्री; १-६ ( तृतीया ) द्विपदा साम्नी बृहती ।

[२] (५) विद्म ते स्वप्न जनित्रं ग्राह्याः पुत्रोऽसि यमस्य करणः ॥ १ ॥ १
अन्तकोऽसि मृत्युरसि ॥२॥ २। तं त्वा स्वप्न तथा सं विद्म स नः स्वप्न दुष्वप्न्यात् पाहि ॥३॥ ३
विद्म ते स्वप्न जनित्रं निर्ऋत्याः पुत्रोऽसि यमस्य करणः ॥ १ ॥
अन्तकोऽसि मृत्युरसि ॥२॥ तं त्वा स्वप्न तथा सं विद्म स नः स्वप्न दुष्वप्न्यात् पाहि ॥३॥ ४
विद्म ते स्वप्न जनित्रमभूत्याः पुत्रोऽसि यमस्य करणः ॥ १ ॥
अन्तकोऽसि मृत्युरसि ॥२॥ तं त्वा स्वप्न तथा सं विद्म स नः स्वप्न दुष्वप्न्यात् पाहि ॥३॥ ५
विद्म ते स्वप्न जनित्रं निर्भूत्याः पुत्रोऽसि यमस्य करणः ॥ १ ॥
अन्तकोऽसि मृत्युरसि ॥२॥ तं त्वा स्वप्न तथा सं विद्म स नः स्वप्न दुष्वप्न्यात् पाहि ॥३॥ ६
विद्म ते स्वप्न जनित्रं पराभूत्याः पुत्रोऽसि यमस्य करणः ॥ १ ॥
अन्तकोऽसि मृत्युरसि ॥२॥ तं त्वा स्वप्न तथा सं विद्म स नः स्वप्न दुष्वप्न्यात् पाहि ॥३॥ ७
(३९)

विद्म ते स्वप्न जनित्रं देवजामीनां पुत्रोऽसि यमस्य करणः ॥१॥ ८
अन्तकोऽसि मृत्युरसि ॥२॥ ९
तं त्वा स्वप्न तथा सं विद्म स नः स्वप्न दुष्वप्न्यात् पाहि ॥३॥ १० (४२)

[६] १-११ यमः । दुःष्वप्ननाशनं, उषा । १-४ प्राजापत्याऽनुष्टुप्; ५ साम्नी पङ्क्तिः; ६ निचृदार्षी बृहती; ७ द्विपदा साम्नी बृहती; ८ आसुरी जगती; ९ आसुरी बृहती; १० आर्ची उष्णिक्; ११ त्रिपदा यवमध्या गायत्री वा आर्ची अनुष्टुप् ।

(६) अजैष्माद्यासनामाद्याभूमानागसो वयम् १
उषो यस्माद् दुष्वप्न्यादभैष्माप तदुच्छतु २
द्विषते तत् परा वह शपते तत् परा वह ३
यं द्विष्मो यश्च नो द्वेष्टि तस्मा एनद् गमयामः ४
उषा देवी वाचा संविदाना वाग् देव्युषसा संविदाना ५
उषस्पतिर्वाचस्पतिना संविदानो वाचस्पतिरुषस्पतिना संविदानः ६
तेऽमुष्मै परा वहन्त्वरायान् दुर्णाम्नः सदान्वाः ७
कुम्भीका दूषीकाः पीयकान् ८
जाग्रद्दुष्वप्न्यं स्वप्नेदुष्वप्न्यम् ९
अनागमिष्यतो वरानवित्तेः संकल्पानमुच्या द्रुहः पाशान् १०
तदमुष्मा अग्ने देवाः परा वहन्तु वध्रिर्यथासद् विथुरो न साधुः ११ (५३)

[७] १-१३ यमः । दुःष्वप्ननाशनं, उषा । १ पङ्क्तिः; २ साम्नी अनुष्टुप्; ३ आसुरी उष्णिक्; ४ प्राजापत्या गायत्री; ५ आर्ची उष्णिक्; ६, ९, ११ साम्नी बृहती; ७ याजुषी गायत्री; ८ प्राजापत्या बृहती; १० साम्नी गायत्री; १२ भुरिक् प्राजापत्याऽनुष्टुप्; १३ आसुरी त्रिष्टुप् ।

(७) तेनैनं विध्याम्यभूत्यैनं विध्यामि निर्भूत्यैनं विध्यामि
पराभूत्यैनं विध्यामि ग्राह्यैनं विध्यामि तमसैनं विध्यामि १
देवानामेनं घोरैः क्रूरैः प्रैषैरभिप्रेष्यामि २
वैश्वानरस्यैनं दंष्ट्रयोरपि दधामि ३
एवानेवाव सा गरत् ४
योऽस्मान् द्वेष्टि तमात्मा द्वेष्टु यं वयं द्विष्मः स आत्मानं द्वेष्टु ५
निर्द्विषन्तं दिवो निः पृथिव्या निरन्तरिक्षाद् भजाम ६
सुयामंश्चाक्षुष ७ (६०)

इदमहमामुष्यायणेऽमुष्याः पुत्रे दुष्वप्न्यं मृजे ८
यददोअदो अभ्यगच्छन् यद् दोषा यत् पूर्वां रात्रिम् ९
यज्जाग्रद् यत् सुप्तो यद् दिवा यन्नक्तम् १०
यदहरहरभिगच्छामि तस्मादेनमव दये ११
तं जहि तेन मन्दस्व तस्य पृष्टीरपि शृणीहि १२
स मा जीवीत् तं प्राणो जहातु १३ (६६)

[८] १-२७ यमः। दुःष्वप्ननाशनम्। १-२७ (प्रथमा) एकपदा यजुर्ब्राह्मी अनुष्टुप्; १-२७ (द्वितीया) त्रिपदा निचृद्गायत्री; १ (तृतीया) प्राजापत्या गायत्री; १-२७ (चतुर्थी) त्रिपदा प्राजापत्या त्रिष्टुप्; २-४,९,१७,१९,२४ (तृतीया) आसुरी जगती, ५,७-८,१०-११,१३,१८ (तृतीया) आसुरी त्रिष्टुप्; ६,१२,१४-१६, २०-२३,२७ (तृतीया) आसुरी पङ्क्तिः; २५-२६ (तृतीया) आसुरी बृहती।

(८) जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं यज्ञोऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ॥१॥ १
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ॥२॥ २
स ग्राह्याः पाशान्मा मोचि ॥३॥ ३
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥४॥ ४। १

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं यज्ञोऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ॥१॥
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ॥२॥
स निर्ऋत्याः पाशान्मा मोचि ॥३॥
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥४॥ ५। २

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं यज्ञोऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ॥१॥
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ॥२॥
सोऽभूत्याः पाशान्मा मोचि ॥३॥
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥४॥ ६। ३ (७२)

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं यज्ञोऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ॥१॥

तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ॥२॥

स निर्ऋत्याः पाशान्मा मोचि ॥३॥

तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥४॥ ७। ४

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं यज्ञोऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ॥१॥

तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ॥२॥

स पराभूत्याः पाशान्मा मोचि ॥३॥

तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥४॥ ८। ५

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं यज्ञोऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ॥१॥

तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ॥२॥

स देवजामीनां पाशान्मा मोचि ॥३॥

तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि॥४॥ ९। ६

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं यज्ञोऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ॥१॥

तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ॥२॥

स बृहस्पतेः पाशान्मा मोचि ॥३॥

तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥४॥ १०। ७

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं यज्ञोऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ॥१॥

तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ॥२॥

स प्रजापतेः पाशान्मा मोचि ॥३॥

तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥४॥ ११। ८ (७७)

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञोऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ॥१॥
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ॥२॥
स ऋषीणां पाशान्मा मोचि ॥३॥
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥४॥ १२। ९

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञोऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ॥१॥
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ॥२॥
स आर्षेयाणां पाशान्मा मोचि ॥३॥
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥४॥ १३। १०

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञोऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ॥१॥
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ॥२॥ सोऽङ्गिरसां पाशान्मा मोचि ॥३॥
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥४॥ १४। ११

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञोऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ॥१॥
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ।२। स आङ्गिरसानां पाशान्मा मोचि।३।
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥४॥ १५। १२

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञोऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ॥१॥
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ॥२॥ सोऽथर्वणां पाशान्मा मोचि ॥३॥
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥४॥ १६। १३

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोऽस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञोऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम् ॥१॥
तस्मादमुं निर्भजामोऽमुमामुष्यायणममुष्याः पुत्रमसौ यः ॥२॥
स आथर्वणानां पाशान्मा मोचि ॥३॥
तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥४॥ १७ १४ (८१)

